# KUSUMAMÂLÂ

OR

A COLLECTION OF CHOICE EXTRACTS FROM STANDARD SANSKRIT WRITERS IN PROSE AND VERSE.

No. II.

Designed for students preparing for the Matriculation Examination.

*With Explanatory Notes*

BY

THE LATE

VAMAN SHIVRAM APTE, M. A.

Nineteenth Edition.

*( Revised )*

BY

M. S. APTE, B. A.

1923



Price Re. 1-8-0.

## PREFACE TO THE FIRST EDITION.

The following pages have been intended to serve as a reading book for Sanskrit students preparing for the Mrtriculation Examination. They contain about 70 extracts taken from the well-known works of most of the renowned standard Sanskrit writers, beginning with Vâlmîki and ending with Jagannâtha Pandit. The extracts are intended to give the student specimens of different styles and modes of thought, and will be found to display a variety of forms descriptive, moral, didactic, narrative, argumentative, epic, dramatic, lyric &c. Each extract has an intelligible beginning and an end, the subject treated therein being given in English at the commencement, and its source at the end. In selecting passages from different works I have had to abridge or condense them in several cases by leaving out single words or long compounds, or even several sentences or verses, where the omission could be made without impairing the beauty of the original or affecting the context or train of reasoning. It was found necessary to do so to prevent the extracts from being needlessly long, but in some cases even the passages so condensed became rather lengthy, and have, therefore, been divided into Parts.

The extracts have been divided into three Series, each Series being expected to be read in the class during one year. An attempt has been made to arrange extracts in each Series progressively but the order may in some cases have to be changed in a subsequent edition if they be found to be too easy or difficult where they are at present. The passages in prose and verse are almost alternate, and miscellaneous verses have been added at the end of each Series, being intended to be learnt by heart by the student. In adapting stories, as in

the tale of Pururavas and Urvasi or of Sâvitri, I have tried to retain, as far as possible, the language of the original, making changes only where absolutely necessary. Difficult words and expressions have been explained in the notes, but mere words have not been given, as Sanskrit-English Dictionaries are now accessible to even the poorest student. At the end is an appendix giving the Questions in Sanskrit set at the Matriculation Examination of the University of Bombay from 1862 to 1890. Thus the book is intended to supply the want of a Sanskrit reading book hitherto felt by senior students in High Schools, and will, I hope, give them some familiarity with the styles and modes of thought of at least the more celebrated writers.

Any suggestion as to improvement &c. will be thankfully received.

Poona,
31st January, 1891. } V. S. APTE.

---

## PREFACE TO THE SECOND EDITION.

This edition does not materially differ from the first. The only changes made are in the order of the lessons, the easiest ones being placed first. A few additional notes on points found to require explanation in the course of teaching have been added. The appendix given at the end of the first edition has been altogether omitted. The changes mentioned above were the only ones which the author intended to make in the second edition.

Dhulia.
3rd December, 1892. } M. S. APTE.

---

## PREFACE TO THE THIRD EDITION.

The rapid sale of the first two editions has encouraged the Editor to give the public the third edition of this book and in doing so he has omitted such of the extracts as he thought difficult for an ordinary student of Sanskrit to understand. He has also added a few more explanatory notes in places where considered to be necessary for a clear elucidation of the text. It is hoped that this edition will receive that support which was accorded to the first two.

Dhulia.
1893. } M. S. APTE, B. A.

---

## PREFACE TO THE FOURTH EDITION.

Nothing new has been done in this Edition, except that a few passages found to be difficult from experience have been omitted and a few more explanatory notes added.

Dhulia.
25th July, 1901. } M. S. APTE.

## PREFACE TO THE NINETEENTH EDITION.

This is a more reprint of the eighteenth Edition.

Dhulia,
3rd August, 1923. } M. S. Apte.

# CONTENTS.



## FIRST SERIES.

# कुसुममाला.



## प्रथमावलिः

## FIRST SERIES.

### I.

### The three fishes.

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः संति । अथ कदाचित्तं जलाशयं दृष्ट्वागच्छद्भिर्मत्स्यजीविभिरुक्तं यदहो बहुमत्स्योऽयं ह्रदः कदाचिदपि नास्माभिरन्वेषितः । तदद्याहारवृत्तिः संजाता । संध्यासमयश्च संभूतस्ततः प्रभातेऽत्रागंतव्यमिति निश्चयः । अतस्तेषां तत्कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता सर्वान्मत्स्यानाहूयेदमूचे । अहो श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम् । तद्रात्रावपि किंचिद्गम्यतां समीपवर्ति सरः । तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यंति । एतन्मम मनसि वर्तते । तन्न युक्तं सांप्रतं क्षणमप्यत्रावस्थातुम् । तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह । अहो सत्यमभिहितं भवता । ममाप्यभीष्टमेतत् । तदन्यत्र गम्यतामिति । उक्तं च ।

यस्यास्ति सर्वत्र गतिः स कस्मात्स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबंति ॥ १ ॥

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच । अहो न भवद्भ्यां मंत्रितं सम्यगेतदिति । यतः किं वाङ्मात्रेणापि तेषां

पितृपैतामहिकमेतत्सरस्त्यक्तुं युज्यते । तद्यद्यायुःक्षयोऽस्ति तद-
न्यत्र गतानामपि मृत्युर्भविष्यत्येव । उक्तं च ।

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विन-
श्यति ॥ २ ॥

तदहं न यास्यामि । भवद्भ्यां च यत्प्रतिभाति तत्कार्यम् ।
अथ तस्य तं निश्चयं ज्ञात्वानागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रांतौ
सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य
यद्भविष्येण सह जलाशयो निर्मत्स्यतां नीतः । अतोऽहं ब्रवीमि ।

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ३ ॥

Panchatantra I.

---

II

The vulture and the cat.

अथ भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः । तस्य
कोटरे दैवदुर्विपाकाद्गलितनखनयनो जरद्गवनामा गृध्रः प्रतिवसति ।
अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात्किंचिदु-
द्धृत्य ददति । तेनासौ जीवति । अथ कदाचिद्दीर्घकर्णनामा मार्जारः
पक्षिशावकान्भक्षितुं तत्रागतः । ततस्तमायातं दृष्ट्वा पक्षिशावकै-
र्भयार्तैः कोलाहलः कृतः । तच्छ्रुत्वा जरद्गवेनोक्तं कोऽयमायाति ।
दीर्घकर्णो गृध्रमवलोक्य सभयमाह । हा हतोऽस्मि । अधुनास्य
सन्निधाने पलायितुमक्षमः । तद्यथा भवितव्यं तद्भवतु । तावद्वि-
श्वासमुत्पाद्यास्य समीपमुपगच्छामि । इत्यालोच्याब्रवीत् । आर्य
त्वामभिवंदे । गृध्रोऽवदत् कस्त्वम् । सोऽवदत् मार्जारोऽहम् । गृध्रो

ब्रूते दूरमपसर । नो चेद्धंतव्योऽसि मया । मार्जारोऽवदत् । श्रूयतां तावदस्मद्वचनम् । ततो यद्यहं वध्यस्तदा हंतव्यः । यतः ।

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥ १ ॥

गृध्रो ब्रूते ब्रूहि किमर्थमागतोऽसि । सोऽवदत् । अहमत्र गंगातीरे नित्यस्नायी ब्रह्मचारी चांद्रायणव्रतमाचरंस्तिष्ठामि । यूयं धर्मज्ञानरता विश्वासभूमय इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवंति । अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः । भवंतश्चैतादृशा धर्मज्ञा यन्मामतिथिं हंतुमुद्यताः । गृध्रोऽवदत् । मार्जारो हि मांसरुचिः । पक्षिशावकाश्चात्र निवसंति । तेनाहमेवं ब्रवीमि । तच्छ्रुत्वा मार्जारो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । ब्रूते च । मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चांद्रायणमध्यवसितम् । परस्परं विवदमानानामपि धर्मशास्त्राणां अहिंसा परमो धर्मः इत्यत्रैकमत्यम् । इत्येवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः ।

ततो दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति । येषामपत्यानि खादितानि तैः शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा । तत्परिज्ञाय मार्जारः कोटरान्निःसृत्य बहिः पलायितः । पश्चात्पक्षिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि । अनंतरं त ऊचुः । अनेनैव जरद्गवेनास्माकं शावकाः खादिताः । इति सर्वैः पक्षिभिर्निश्चित्य गृध्रो व्यापादितः । अतोऽहं ब्रवीमि ।

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥ २ ॥

Hitopadesa I.

III

An account of Ma'lavika'.

**राजा** । ( चेट्यौ प्रति ) के भवत्यौ का चेयम् ।

**प्रथमा** । देव इयमावयोर्भर्तृदारिका ।

**राजा** । कथमिव ।

**उभे** । शृणोतु भर्ता । योऽसौ भर्त्रा विजयदंडैर्विदर्भनाथं वशीकृत्य बंधनान्मोचितः कुमारो माधवसेनो नाम तस्येयं कनीयसी भागिनी मालविका नाम ।

**देवी** । अहो राजदारिकेयम् । चंदनं खलु मया पादुकापरिभोगेण दूषितम् ।

**राजा** । अथात्रभवती कथमिवेत्थंभूता ।

**मालविका** । ( निःश्वस्यात्मगतम् ) विधेर्नियोगेन ।

**द्वितिया** । भर्ता शृणोतु । दायादवशं गत आवयोर्भर्तृदारिके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमपनीतैषा ।

**राजा** । श्रुतपूर्वं मयैतत् । ततस्ततः ।

**उभे** । एतावदेव । अतःपरं न जानीवः ।

**परिव्राजिका** । अतःपरमहं मंदभागिनी कथयिष्यामि । माधवसेनसाचिवं सुमतिं ममाग्रजमवगच्छ । स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबंधापेक्षया पथिकसार्थं वैदिशगामिनमनुप्रविष्टः । स चाटव्यंते निविष्टो गताध्वा वणिग्जनोऽध्वश्रमार्तो विश्रमितुम् । ततश्च ।

तूणीरबंधपरिणद्धभुजांतरालमाकर्णलंबिशिखिपिच्छकलापधारि ।
कोदंडपाणि निनदत्प्रतिरोधकानामापातदुष्प्रसहमाविरभूदनीकम् ॥ १ ॥

ततो मुहूर्तं बद्धयुद्धास्ते पराङ्मुखीकृतास्तस्करैः सार्थवाहयोद्धारः । ततः स मत्सोदर्यः

इमां परीप्सुर्दुर्जातेः पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ २ ॥

**राजा** । तनुभृतामीदृशी लोकयात्रा । शोचितव्यास्तत्रभवान्सकलीकृतभर्तृपिंडः ।

**परिव्राजिका** । ततोहं मोहमुपागता यावत्संज्ञामुपलभे तावदियं दुर्लभदर्शना संवृत्ता । ततो भ्रातृशरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्यदुःखया मया त्वदीयं देशमवतीर्येमे काषाये गृहीते । इयमप्याटविकेभ्यो वीरसेनं वीरसेनाद्देवीं गता देवीगृहे लब्धप्रवेशया मया पुनर्दृष्टा । इत्येतदवसानं कथायाः ।

**धारिणी** । भगवति त्वयाभिजनवतीं मालविकामनाचक्षाणयासांप्रतं कृतम् ।

**परिव्राजिका** । शांतं पापं शांतं पापम् । कारणेन खलु मया नैभृत्यमवलंबितम् । इयं पितरि जीवति केनापि सिद्धादेशेन साधुना मत्समक्षमादिष्टा संवत्सरमात्रं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तमवश्यंभाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमंतमवेक्ष्य कालप्रतीक्षया मया तत्साधु कृतमिति पश्यामि ।

Ma'lavika'gnimitra V.

---

## IV.

### Pârvati practising penance.

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिंद रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥१॥

इयेष सा कर्तुमवंध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥२॥
निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयंती महतो मुनिव्रतात् ॥३॥
मनीषिताः संति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥
इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियंतुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥
कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनास्विनी ।
अयाचतारण्यनिवासमात्मनः फलोदयांताय तपःसमाधये ॥ ६ ॥
अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरी शिखरं शिखंडिमत् ॥७॥
विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचंदनम् ।
बबंध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥
यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पंकजं सशैवलासंगमपि प्रकाशते ॥ ९ ॥
विसृष्टरागादधरान्निवर्तितः स्तनांगरागारुणिताच्च कंदुकात् ।
कुशांकुरादानपरिक्षतांगुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥ १० ॥
महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थंडिल एव केवले ॥११॥
पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणांगनासु च ॥१२॥
अतंद्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥१३॥
अरण्यबीजांजलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।

यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥ १४ ॥
कृताभिषेकां हुतजातवेदसं त्वगुत्तरासंगवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १५ ॥
विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यंतरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥ १६ ॥
यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त कांक्षितम् ।
तदाऽनपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥ १७ ॥
क्लमं ययौ कंदुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः कांचनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ॥ १८ ॥
शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ १९ ॥
तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।
अपांगयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥ २० ॥
निनाय साऽत्यंतहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रंदिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥ २१ ॥
स्वयंविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां वदंत्यपर्णेति च तां पुराविदः ॥ २२ ॥
मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमंगं ग्लपयंत्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २३ ॥

Kuma'rasambhava V.

---

## V.

A specimen of a letter.

स्वस्ति । यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मं-
तमाग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति । विदितमस्तु । योऽसौ राज-

सूययज्ञे दीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य संवत्सरोपावर्तनीयो निरर्गलस्तुरगो विसृष्टः स सिंधोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः । तत उभयोः सेनयोर्महानासीत्संमर्दः ।

ततः परान्पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥

सोहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसंदर्शनायागंतव्यमिति ।

Ma'lavika'gnimitra V.

---

## VI.

### A thunder-storm.

मेघो जलार्द्रमहिषोदरभृंगनीलो
विद्युत्प्रभारचितपीतपटोत्तरीयः ।
आभाति संहृतबलाकगृहीतशंखः
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥ १ ॥
एता निषिक्तरजतद्रवसंनिकाशा
धारा जवेन पतिता जलदोदरेभ्यः ।
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-
श्छिन्ना इवांबरपटस्य दशाः पतंति ॥ २ ॥
एतत्तद्धृतराष्ट्रचक्रसदृशं मेघांधकारं नभो
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।
अक्षद्यूतजितो युधिष्ठिर इवाध्वानं गतः कोकिलो
हंसाः संप्रति पांडवा इव वनादज्ञातचर्यां गताः ॥३॥

गर्जंति शैलशिखरेषु विलंबिबिंबा
मेघा वियुक्तवनिताहृदयानुकाराः ।
येषां रवेण सहसोत्पतितैर्मयूरैः
खं वीज्यते मणिमयैरिव तालवृंतैः ॥ ४ ॥
पंकक्लिन्नमुखाः पिबंति सलिलं धाराहता दर्दुराः
कंठं मुंचति बर्हिणः समदनो नीपः प्रदीपायते ।
संन्यासः कुलदूषणैरिव जनैर्मेघैर्वृतश्चंद्रमा
विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र संतिष्ठते ॥ ५ ॥
पवनचपलवेगः स्थूलधाराशरौघः
स्तनितपटहनादः स्पष्टविद्युत्पताकः ।
हरति करसमूहं खे शशांकस्य मेघो
नृप इव पुरमध्ये मंदवीर्यस्य शत्रोः ॥ ६ ॥
एतैरार्द्रतमालपत्रमलिनैरापीतसूर्यं नभो
वल्मीकाः शरताडिता इव गजाः सीदंति धाराहताः ।
विद्युत्कांचनदीपिकेव रचिता प्रासादसंचारिणी
ज्योत्स्ना दुर्बलभर्तृकेव वनिता प्रोत्सार्य मेघैर्हृता ॥ ७ ॥
एते हि विद्युद्गुणबद्धकक्षा गजा इवान्योऽन्यमभिद्रवंतः
शक्राज्ञया वारिधराः सधारा गां रूप्यरज्ज्वेव समुद्धरंति ॥८॥
एह्येहीति शिखंडिनां पटुतरं केकाभिराक्रंदितः
प्रोड्डीयेव बलाकया सरभसं सोत्कंठमालिंगितः ।
हंसैरुज्झितपंकजैरतितरां सोद्वेगमुद्वीक्षितः
कुर्वन्नंजनमेचका इव दिशो मेघः समुत्तिष्ठते ॥ ९ ॥
गता नाशं तारा उपकृतमसाधाविव जने
वियुक्ताः कांतेन स्त्रिय इव न राजंति ककुभः ।

प्रकामांतस्तप्तं त्रिदशपतिशस्त्रस्य शिखिना
द्रवीभूतं मन्ये पतति जलरूपेण गगनम् ॥ १० ॥
उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम्
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि ॥ ११ ॥
विद्युद्भिर्ज्वलतीव संविहसतीवोच्चैर्बलाकाशतै-
र्माहेंद्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा ।
विस्पष्टाशानिनिःस्वनेन रसतीवाघूर्णतीवानिलै-
र्नीलैः सांद्रमिवाहिभिर्जलधरैर्धूपायतीवांबरम् ॥ १२ ॥

Mrichchhakatika V.

---

## VII

### Yayati with renovated youth.

यतिययातिसंयात्यायातिवियातिकृतिसंज्ञा नहुषस्य षट् पुत्रा महाबलपराक्रमा बभूवुः । यतिस्तु राज्यं नैच्छत् । ययातिस्तु भूभृदभवत् । उशनसश्च दुहितरं देवयानीं शर्मिष्ठां च वार्षपर्वणीमुपयेमे ।

यदुं च तुर्वसुं चैव देवयानी व्यजनयत् ।
द्रुह्युं चाणुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ १ ॥

काव्यशापाच्चाकालेनैव ययातिर्जरामवाप । प्रसन्नशुक्रवचनाच्च जरां संक्रमयितु ज्येष्ठं पुत्रं यदुमुवाच । त्वन्मातामहशापादियमकालेनैव जरा मामुपस्थिता । तामहं तस्यैवानुग्रहाद्भवतः संचारयाम्येकं वर्षसहस्रं न तृप्तोऽस्मि विषयेषु । त्वद्वयसा विषयानहं भोक्तुमिच्छामि नात्रभवता प्रत्याख्यानंकर्तव्यमित्युक्तः स नैच्छत्तां जरामादातुम् । तं चापि पिता शशाप । त्वत्प्रसूतिर्न राज्यार्हा भविष्यतीति । अनंतरं द्रुह्युं तुर्वसुमणुं च पृथिवीपतिर्जराग्रहणार्थं स्वयौवनप्रदानाय च चोदयामास । तैरप्येकैकशः प्रत्याख्यातस्तांश्च शशाप । अथ शर्मिष्ठातनयं पूरुं तथैवाह । स चातिप्रवणमतिः प्रणम्य पितरं सब-

हुमानं महान्प्रसादोऽयमस्माकमित्यभिधाय जरां प्रतिजग्राह स्वकीयं च यौवनं पित्रे ददौ । सोऽपि च नवं यौवनमासाद्य धर्माविरोधेन यथाकामं यथाकालोपपन्नं यथोत्साहं विषयं चचार । सम्यक् प्रजापालनमकरोत् । विश्वाच्या सहोपभोगं भुक्त्वा कामानामंतमवाप्स्यामीत्यनुदिनं तन्मनस्को बभूव । अनुदिनं चोपभोगतः कामानतीव रम्यान्मेने । ययातिरुवाच ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ २ ॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
समदृष्टेस्तदा पुंसः सर्वा एव सुखा दिशः ॥ ३ ॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
तां तृष्णां संत्यजन्प्राज्ञः सुखेनैवाभिपूर्यते ॥ ४ ॥
जीर्यंति जीर्यतः केशा दंता जीर्यंति जीर्यतः ।
धनाशा जीविताशा च जीर्यतोपि न जीर्यतः ॥ ५ ॥
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वेव जायते ॥ ६ ॥
तस्मादेतामहं त्यक्त्वा ब्रह्मण्याध्याय मानसम् ।
निर्द्वंद्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥ ७ ॥
पुरोः सकाशादादाय जरां दत्वा च यौवनम् ।
राज्येभिषिच्य पूरुं च प्रययौ तपसे वनम् ॥ ८ ॥

Vishnu Purana.

---

## VIII.

### Introduction of Patralekha to Chandra'pida.

अन्येद्युश्च स प्रभातसमय एव सर्वांतःपुराधिकृतमवनिपतेः परम-

संमतं कैलासनामानं कंचुकिनमायांतमपश्यत् । स कृतप्रणामः समुपसृत्य क्षितितलानिहितदक्षिणकरो विज्ञापयामास । कुमार महादेवी विलासवती समाज्ञापयति । इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीमवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती बंदीजनेन सहानीयांतःपुरपरिचारिकामध्यमुपनीता । सा मया विगतनाथा राजदुहितेति च समुपजातस्नेहया दुहितृनिर्विशेषमियंतं कालमुपलालिता संवर्धिता च । तदियमिदानीमुचिता भवतस्तांबूलकरंकवाहिनीति कृत्वा मया प्रेषिता । न चास्यामायुष्मता परिजनसामान्यदृष्टिना भवितव्यम् । बालेव लालनीया । स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया । शिष्येव द्रष्टव्या । सुहृदिव सर्वविश्रंभेष्वभ्यंतरी करणीया । दीर्घकालसंवार्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे बलवानस्यां पक्षपातः । महाभिजनराजवंशप्रसूता चार्हतीयमेवंविधानि कर्माणि । नियतं स्वयमेवेयमाभिविनीततया कातिपयैरेव दिवसैः कुमारमाराधयिष्यति । केवलमतिचिरकालोपचिता बलवती मे प्रेमवृत्तिरस्यामविदितशीलश्चास्याः कुमार इति संदिश्यते । सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमतिचिरमुचिता परिचारिका ते भवतीति । इत्याभिधाय विरतवचसि कैलासे कृताभिजातप्रणामां पत्लेखामनिमिषलोचनं सुचिरमालोक्य चंद्रापिडो यथाज्ञापयत्यंबैवमुक्त्वा कंचुकिनं प्रेषयामास ।

पत्रलेखा तु ततः प्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य छायेव राजसूनोः पार्श्वं मुमोच । चंद्रापीडस्यापि तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत् । अभ्यधिकं च प्रातिदिवसमस्याः प्रसादमकरोत् । आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रंभेष्वमन्यत ।

Ka'dambari.

## IX.

Atreyi and Va'santi ( a Sylvan deity. )

( नेपथ्ये । स्वागतं तपोधनायाः ) ।

( प्रविश्य ) अध्वगवेशा तापसी । अये वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते ।

( प्रविश्य ) । वनदेवता । ( अर्घ्यं विकीर्य )

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः संगः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

**ताप.** । किमत्रोच्यते ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

( इत्युपाविशतः ) ।

**वन.** । कां पुनरत्रभवतीमवगच्छामि ।

**ताप.** । आत्रेय्यस्मि ।

**वन.** । आत्रेयि । कुतः पुनरिहागम्यते किं प्रयोजनं वा दंडकारण्यप्रवेशे ।

**आत्रे.** । अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदोवसंति । तेभ्योऽधिगंतुं निगमांतविद्यां वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

**वन.** । यदि तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत्कोऽयमत्रार्याया दीर्घप्रवासः ।

**आत्रे.** । तत्र महानध्ययनप्रत्यूह इति दीर्घप्रवासोऽङ्गीकृतः ।

**वन.** । कीदृशः ॥

**आत्रे.**। तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् ।

**वन.**। अपि तयोर्नामसंविज्ञानमस्ति ।

**आत्रे.** । तयैव किलदेवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वन.** । कीदृशः प्रभावः ।

**आत्रे.** । तयोः किल सरहस्यजृंभकास्त्राण्याजन्मसिद्धानीति ।

**वन.** । अहो नु भोः । चित्रमेतत् ।

**आत्रे.** । तौ च भगवता वाल्मीकिना धात्रीकर्मवस्तुतः परिगृह्य पोषितौ परिरक्षितौ च । वृत्तचूडौ त्रयीवर्जमितरा विद्या सावधानेन परिपाठितौ । समनंतरं च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय तौ त्रयीविद्यामध्यापितौ । न ह्येताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । यतः

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहंति वा ।
भवति च पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिंबोद्ग्राहे मणिर्न मृदां चयः ॥ ४ ॥

**वन.** । अयमसावध्ययनप्रत्यूहः ।

**आत्रे.** । अपरश्च ।

**वन.** । अथापरः कः ।

**आत्रे.**। अथ स ब्रह्मर्षिरेकदा मध्यंदिनसमये नदीं तमसामनुप्रपन्नः। तत्र युग्मचारिणोः क्रौंचयोरेकं व्याधेन विध्यमानं ददर्श । आकस्मिकप्रत्यवभासां च देवीं वाचमनुष्टुप्छंदसा परिणतामभ्युदैरयत् ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।

यत्क्रौंचमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥ इति

**वन.** । चित्रमाम्नायादन्योऽयं नूतनश्छंदसामवतारः ।

**आत्रे.** । तेन खलु पुनः समयेन तं भगवंतमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसंगम्य भगवान्भूतभावनः पद्मयोनिरवोचत् । ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि । तद् ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु । आद्यः कविरसीत्युक्त्वांतर्हितः । अथ भगवान्प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

**वन.** । हंत तर्हि पंडितः संसारः ।

**आत्रे.** । तस्मादवोचं तत्र महानध्ययनप्रत्यूह इति ।

**वन.** । युज्यते ।

**आत्रे.** । विश्रांतास्मि भद्रे संप्रत्यगस्त्याश्रमस्य पंथानं ब्रूहि ।

**वन.** । इतः पंचवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

**आत्रे.** । ( सबाष्पा ) अप्येतत्तपोवनम् । अप्येषा पंचवटी । अपि सरिदियं गोदावरी । अप्ययं गिरिः प्रस्रवणः । अपि वनदेवता जनस्थानवासिनी वासंती त्वम् ।

**वासं.** । अस्त्येतत्सर्वम् ।

**आत्रे.** । वत्से जानकि ।

स एष ते वल्लभबंधुवर्गः प्रासंगिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृश्यामिव नः करोति ॥ ६ ॥

**वासं.** । ( सभयं स्वगतं ) कथं नामशेषामित्याह । ( प्रकाशम् ) आर्ये किमत्याहितं सीतादेव्याः ।

**आत्रे.** । न केवलमत्याहितं सापवादमपि ।

**वासं.** । कथमिव ।

**आत्रे.** । ( कर्णे ) । एवमेवम् ।

**वासं.** । अहह दारुणो दैवनिर्घातः । ( इति मूर्च्छति ) ।

**आत्रे.** । भद्रे समाश्वसिहि समाश्वसिहि ।

**वासं.** । हा प्रियसखि । हा महाभागे । ईदृशस्ते निर्माणभागः । रामभद्र रामभद्र । अथवा अलं त्वया । आर्ये आत्रेयि । अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः ।

**आत्रे.** । नहि नहि ।

**वासं.** । हा कष्टमार्यारुंधतीवसिष्ठाधिष्ठिते रघुकुलगृहे जीवंतीषु च प्रवृद्धराज्ञीषु कथमिदं जातम् ।

**आत्रे** । ऋष्यशृंगसत्रे गुरुजनस्तदासीत् । संप्रति परिसमाप्तं तद्द्वादशवार्षिकं सत्रम् । ऋष्यशृंगेण च संपूज्य विसर्जिता गुरवः । ततो भगवत्यरुंधती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वसिष्ठस्य परिशुद्धा वाचो यथा वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति ।

**वासं.** । अथ स राजा किमारंभः संप्रति ।

**आत्रे.** । तेन राज्ञा क्रतुरश्वमेधः प्रक्रांतः ।

**वासं.** । अहह । धिक् परिणीतमपि ।

**आत्रे.** । शांतं पापम् ।

**वासं.** । का तर्हि यज्ञे सहधर्मचारिणी ।

**आत्रे.** । हिरण्मयी सीताप्रतिकृतिः ।

**वासं.** । हंत भोः ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ७ ॥

**आत्रे.** । विसृष्टश्च वामदेवानुमंत्रितो मेध्योऽश्वः । उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः । तेषामधिष्ठाता च लक्ष्मणात्मज-

श्चंद्रकेतुर्दत्तदिव्यास्त्रसंप्रदायश्चतुरंगसाधनान्वितोऽनुप्राहितः ।

**वासं.** । (सस्नेहकौतुकास्रं) । कुमारलक्ष्मणस्यापि पुत्रः । हंत मातर्जीवामि ।

**आत्रे.** । अत्रांतरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडनमब्रह्मण्यमुद्घोषितम् । ततो न राजापराधमंतरेण प्रजास्वकालमृत्युश्चरतीति आत्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत् ।

शंबूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ ८ ॥

इति उपश्रुत्य कृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचरितुमारब्धवान् ।

**वासं.** । शंबूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति । तदपि नाम रामभद्रः पुनरपीदं वनमलंकुर्यात् ।

**आत्रे.** । भद्रे गम्यतेऽधुना ।

**वासं.** । एवमस्तु । कठोरीभूतोऽयं दिवसः । तथा हि

कंडूलद्विपगंडपिंडकषणोत्कंपेन संपातिभि-
र्घर्मस्रंसितबंधनैः स्वकुसुमैरर्चंति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लांतकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

ttaUrara'macharita II

## XI.

### The Yaksha's abode.

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपांते कृतककतनयः कांतया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमंदारवृक्षः ॥ १ ॥
वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा

हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संनिकृष्टं
नाध्यास्यंति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ २ ॥
तस्यास्तीरे रचितशिखरः पेशलैरिंद्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्या प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपांतस्फुरिततडितं त्वां तमेव स्मरामि ॥ ३ ॥
रक्ताशोकश्चलकिसलयः केसरश्चात्र कांतः
प्रत्यासन्नौ कुरबककवृतेर्माधवीमंडपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ ४ ॥
तन्मध्ये च स्फटिकफलका कांचनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिंजावलयसुभगैर्नर्तितः कांतया मे
यामध्यास्ते दिवसविगमे नीलकंठः सुहृद्वः ॥ ५ ॥
एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपांते लिखितवपुषौ शंखपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ६ ॥
गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः ।
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यंतर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ७ ॥

Meghadu'ta.

---

## XII.

### A foundling.

कदाचिद्वामदेवशिष्यः सोमदेवशर्मा नाम कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत । देव रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि । स्थविरे का त्वम् । एतस्मिन्नटवीमध्ये बालकमुद्वहंती किमर्थमायासेन भ्रमसीति । वृद्धयाप्यभाषि । मुनिवर कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति । तन्नंदिनीं नयनानंदकारिणीं सुवृत्तां नाम तस्माद् द्वीपादागतो मगधनाथमंत्रिसंभवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रांतभूवलयो मनोहारी व्यवहार्युपयम्य सुवस्तुसंपदा श्वशुरेण संमानितोऽभूत् । कालक्रमेण नतांगी गर्भिणी जाता । ततः सोदरविलोकनकूतूहलेन रत्नोद्भवः कथंचिच्छ्वशुरमनुनीय चपललोचनयानया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे । कल्लोलमालिकाभिहतः पोतः समुद्रांभस्यमज्जत् । गर्भभरालसां ललनां धात्रीभावेन कल्पिताहं कराभ्यामुद्वहंती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम् । सुहृज्जनपरिवृतो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरमगमद्वा न जानामि । क्लेशस्य परां काष्ठामधिगता सुवृत्तास्मिन्नटवीमध्येऽद्य सुतमसूत । प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति । विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गंतुमनुचितमिति कुमारोऽप्यानायीति । तस्मिन्नेव क्षणे वन्यो वारणः कश्चिददृश्यत । तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत् । अहं समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम् । निपतितं बालकं पल्लवकवलमिवाददति गजपतौ कंठीरवो भीमरवो महाग्रहेण न्यपतत् । भयाकुलेन दंतावले झटिति वियति समुत्पात्यमानो बालको न्यपतत् । चिरायुष्मत्तया स चोन्नततरुशाखासमासीनेन वानरेण केनाचित्पक्वफ-

लब्धुद्धया परिगृह्य फलेतरतया विततस्कंधमूले निक्षिप्तोऽभूत । सोऽपि मर्कटः क्वचिदगात् । बालकेन सत्त्वसंपन्नतया सकलक्लेशसहेनाभावि । केसरिणा करिणं निहत्य कुत्रचिदगामि । लतागृहान्निर्गतोऽहमपि तेजःपुंजं बालकं शनैरवनिरुहादवतार्य वनांतरे वनितामन्विष्यविलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवन्निकटमानीतवानस्मीति । सर्वेषांसुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं बिभ्राणो राजा रत्नोद्भवः कथमभवदिति चिंतयंस्तन्नंदनं पुष्पोद्भवनामधेयं विधाय तदुदंतं व्याख्याय सुश्रुताय विषादसंतोषावनुभवंस्तदनुजतनयं समर्पितवान् !

Dashakuma'racharita.

## XIII.

### An ideal king.

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छंदसामिव ॥ १ ॥
तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेंदुरिंदुः क्षीरनिधाविव ॥ २ ॥
व्यूढोरस्को वृषस्कंधः शालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ ३ ॥
सर्वातिरिक्तसारेण सर्वतेजोभिभाविना ।
स्थितः सर्वोन्नतेनोर्वीं क्रांत्वा मेरुरिवात्मना ॥ ४ ॥
आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारंभ आरंभसदृशोदयः ॥ ५ ॥
भीमकांतैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ ६ ॥
रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियंतुर्नेमिवृत्तयः ॥ ७ ॥
प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।

सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ ८ ॥
सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुंठिता बुद्धिर्मौर्वी धनुषि चातता ॥ ९ ॥
तस्य संवृतमंत्रस्य गुढाकारेंगितस्य च ।
फलानुमेयाः प्रारंभाः संस्काराः प्राक्तना इव ॥ १० ॥
जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ ११ ॥
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबंधित्वात्तस्य सप्रसवा इव ॥ १२ ॥
अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना ॥ १३ ॥
प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ १४ ॥
स्थित्यै दंडयतो दंड्यान्परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ १५ ॥
दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ १६ ॥
न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ १७ ॥
द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदंगुलीवोरगक्षता ॥ १८ ॥
तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्वे तस्यान्परार्थैकफला गुणाः ॥ १९ ॥
स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वी शशासैकपुरीमिव ॥ २० ॥
तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।

पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ २१ ॥
कलत्रवंतमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ २२ ॥

Raghuvamsha. I.

## XIV.

### Chandra'pida requesting Mahasveta to tell her story.

इति परिसमापिताहारां निर्वर्तितसंध्योचिताचारां शिलातले विश्रब्धमुपविष्टां निभृतमुपसृत्य नातिदूरे समुपविश्य मुहूर्तमिव स्थित्वा चंद्रापीडः सविनयमवादीत् । भगवति त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषसुलभो लघिमा बलादनिच्छंतमपि मां प्रश्नकर्माणि नियोजयति । जनयति हि प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः । स्वल्पाप्येकदेशावस्थानकालकला परिचयमुत्पादयति । अणुरप्युपचारपरिग्रहः प्रणयमारोपयति । तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यमिच्छामि । अतिमहत्खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन्विषये । कतरन्मरुतामृषीणां गंधर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना । किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् । केदं वयः केदं तपः केयमाकृतिः क चायं लावण्यातिशयः केयमिंद्रियाणामुपशांतिः । तदद्भुतमिव मे प्रतिभाति । किंनिमित्तं वानेकसिद्धसाध्यसंबाधानि सुरलोकसुभगान्यपहाय दिव्याश्रमपदान्येकाकिनी वनमिदममानुषमाधिवससि । अपनयतु नः कौतुकमावेदयतु भवती सर्वमिदम् । इत्येवमाभिहिता सा किमप्यंतर्ध्यायंती तूष्णीं मुहूर्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे ।

तां च प्ररुदितां दृष्ट्वा चंद्रापीडस्तत्क्षणमचिंतयत् । अहो दुर्निवारता व्यसनोपनिपातानां यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां

कुर्वंति । सर्वथा न कंचन नः स्पृशंति शरीरधर्माणमुपतापाः । बलवती हि द्वंद्वानां प्रवृत्तिः । इदमपरमधिकतरमुपजनितमतिमहन्मनसि मे कौतुकमस्या बाष्पसलिलपानेन । न ह्यल्पीयसा शोककारणेन क्षेत्रीक्रियंत एवंविधा मूर्तयः । न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा । इति संवर्धितकुतूहलश्च शोकस्मरणहेतुतामुपगतमपराधिनमिवात्मानमवगच्छन्नुत्थाय प्रस्रवणादंजलिना मुखप्रक्षालनोदकमुपनिन्ये। सा तु प्रक्षाल्य लोचने वल्कलोपांतेन वदनमपमृज्य दीर्घमुष्णं च निःश्वस्य शनैः प्रत्यवादीत् । राजपुत्र किमनेनातिनिर्घृणहृदयाया मम मंदभाग्यायाः पापायाः जन्मनः प्रभृति वैराग्यवृत्तांतेनाश्रवणीयेन श्रुतेन । तथापि यदि महत्कुतूहलं तत्कथयामि श्रूयताम् ।

Kadambari.

---

## XV.

### A contrast.

अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेशामदृष्टपूर्वां वनितामपश्यत् ॥ १ ॥
सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जतुः परेषां जयशब्दपूर्वं तस्यांजलिं बंधुमतो बबंध ॥ २ ॥
अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ३ ॥
लब्धांतरा सामरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ ४ ॥
का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ५ ॥
तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेव ।
तस्याः पुरः संप्रति वीतनाथा जानीहि राजन्नधिदेवतां माम् ॥६॥
वस्वौकसारामभिभूयसाहं सौराज्यबद्धोत्सवया विभूत्या ।

समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम् ॥ ७ ॥
विशीर्णतल्पाट्टशतो निवेशः पर्यस्तसालः प्रभुणा विना मे ।
विडंबयत्यस्तनिमग्नसूर्यं दिनांतमुग्रानिलभिन्नमेघम् ॥ ८ ॥
निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥ ९ ॥
आस्फालितं यत्प्रमदाकराग्रैर्मृदंगधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदंभः शृंगाहतं क्रोशति दीर्घिकाणाम् ॥ १० ॥
वृक्षेशया यष्टिनिवासभंगा मृदंगशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥ ११ ॥
सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान् ।
सद्यो हतन्यंकुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते ते ॥ १२ ॥
चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभंगाः ।
नखांकुशाघातविभिन्नकुंभाः संरब्धसिंहप्रहृतं वहंति ॥ १३ ॥
कालांतरश्यामसुधेषु नक्तमितस्ततो रूढतृणांकुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्छंति न चंद्रपादाः ॥ १४ ॥
आवर्ज्य शाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिंदैरिव वानरैस्ताः क्लिश्यंत उद्यानलता मदीयाः ॥ १५ ॥
रात्रावनाविष्कृतदीपभासः कांतामुखश्रीवियुता दिवापि ।
तिरस्क्रियंते कृमितंतुजालैर्विच्छिन्नधूमप्रसरा गवाक्षाः ॥ १६ ॥
बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवंति ।
उपांतवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि ॥ १७ ॥
तदर्हसीमां वसतिं विसृज्य मामभ्युपेतु कुलराजधानीम् ।
हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्तिम् ॥ १८ ॥
तथेति तस्याः प्रणयप्रतीतः प्रत्यग्रहीत्प्राग्रहरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबंधेन तिरोबभूव ॥ १९ ॥

Raghuvamsha XVI.

## XVI.

### The heroic and fiery-tempered Asvattha'man.

#### Part I.

( ततः प्रविशत्युत्खातखड्गः कलकलमाकर्णयन्नश्वत्थामा .)

**अश्वत्थामा**—महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचंडघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोद्य समरोदधेरयमभूतपूर्वः पुरः ॥ १ ॥

(विचिंत्य) । ध्रुवं गांडीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रांतमर्यादेन परिकोपितस्तातः समुल्लंघ्य शिष्यप्रियतामात्मसदृशभावमाचेष्टते । ( पृष्ठतोऽवलोक्य ) तदलमिदानीं मम रथप्रतीक्षयानया । सशस्त्रश्चास्मि सजलजलधरप्रभाभास्वरेण खड्गेन । यावत्समरभुवमवतरामि । (परिक्रम्य वामाक्षिस्पंदनं सूचयित्वा) । आः कथं ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि समरगमनविघ्नमुत्पादयंति। भवतु । अवगच्छामि। ( सावष्टंभं परिक्रम्याग्रतो विलोक्य ) कथं रणभूमेः समंतादपक्रामतां महान्नादोयं बलानाम् । हा धिक्कष्टम् कथमेते महारथाः कर्णादयोपि समरात्पराङ्गमुखा भवंति । कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत् । भवतु । एवं तावत् । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः कृतं कृतं समरपरित्यागसाहसेन ।
यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोन्यतः प्रयातुम् ।
अथ मरणमवश्यमेवजंतोः किमिति मुधा मलिनं यशः कुरुध्वम् ॥२॥

अपि च ताते चापद्वितीये रणधुरां वहति को भयस्यावकाशः ।

। नेपथ्ये । कुतोऽद्यापि ते तातः ।

**अश्वत्थामा**—(श्रुत्वा) किं ब्रूथ । कुतोऽद्यापि ते तात इति ।

आः क्षुद्राः समरभीरवः कथमेवं प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया ।

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ।। ३ ।।

( ततः प्रविशति संभ्रांतः सप्रहारः सूतः ) ।

सूतः—परित्रायतां परित्रायतां कुमारः । (इति पादयोः पतति) ।

अश्वत्थामा—(विलोक्य) । अये तातस्य सारथिरश्वसेनः । आर्य त्रैलोक्यत्राणक्षमस्य सारथिरासि । किं मत्तः शिशुजनात्परित्राणमिच्छसि ।

सूतः—( उत्थाय सकरुणम् ) । कुमार कुतोऽद्यापि ते तातः ।

अश्वत्थामा—( सावेगम् ) । किं ततो नामास्तमुपगतः ।

सूतः—अथ किम् ।

अश्वत्थामा—। हा तात हा सुतवत्सल हा लोकत्रयैकधनुर्धर ।

सूतः—कुमार अलमत्यंतशोकावेगेन । वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि त्वदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव।

अश्वत्थामा—(अश्रूणि विमुच्य । आर्य कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोपि नामास्तमुपगतः ।

सूतः—( अश्रूणि विमुच्य) श्रूयताम् ।

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ।। ४ ।।

अश्वत्थामा । हा तात हा सुतवत्सल हा वृथा मदर्थपरित्यक्त-

जीवित हा शौर्यराशे हा युधिष्ठिरपक्षपातिन् । ( इति रोदिति ) ।

सूतः—। कुमार अलमत्यंतपरिदेवनकार्पण्येन ।

अश्वत्थामा—। ( आकाशे ) । युधिष्ठिर युधिष्ठिर ।

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम् ॥ ५ ॥

( ततः प्रविशति सोद्वेगः कृपः ) ।

सूतः । कुमार एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

अश्वत्थामा । ( विलोक्य सबाष्पम् ) मातुल !

क्व नु खलु स ते स्वसुः श्लाघ्यो भर्ता गतः ।

कृपः। वत्स परिगतपरिगंतव्य एव भवान् । अलमत्यंतशोकावेगेन ।

अश्वत्थामा । मातुल परित्यक्तमेव मया परिदेवनम् । एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

कृपः—वत्स अनुपपन्नमिदं भवद्विधानाम् ।

अश्वत्थामा । आर्य सत्यमेवेदम् । किं त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणन्धारयितुम् । तद्गच्छामि तमेवोद्देशं यत्र तादृशमपि पितरं द्रक्ष्यामि ।

। नेपथ्ये । आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ ६ ॥

अश्वत्थामा । (सक्रोधं सकंपं च कृपसूतौ दृष्ट्वा) । किं नामेदम् ।

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशव्रतमास्थितस्य ।

तातस्य मे पलितमौलिनिरस्तकाशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ ७ ॥

**कृपः** । वत्स एवं किल जनः कथयति ।

**अश्वत्थामा** । किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः ।

**सूतः** । ( सभयम् ) कुमार आसीदयं तस्य तेजोराशेर्नवः परिभवावतारः ।

**अश्वत्थामा** । हा तात हा पुत्रप्रिय मम मंदभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः । अथवा

परित्यक्ते देहे रणशिरसि शोकांधमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवायं पादः शिरसि निहितस्तस्य न करः ॥ ८ ॥

आ दुरात्मन्पांचालापसद

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शंकां खलु विदधतः पाणिमस्योत्तमांगे
अश्वत्थामा करधृतधनुः पांडुपांचालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ ९ ॥

अहो युधिष्ठिर युधिष्ठिर । अजातशत्रो अमिथ्यावादिन् धर्मपुत्र सानुजस्य ते किमनेनापकृतम् । अथवा किमनेनालीकप्रकृतिजिह्मचेतसा । अर्जुन सात्यके वृकोदर माधव युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलंकेन मनुजपशुना स्पृश्यमानमुत्तमांगमुपेक्षितुम् । अथवा सर्व एवैते पातकिनः । किमेतैः ।

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।

नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ १० ॥

कृपः । वत्स किं न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

अश्वत्थामा । सूत गच्छ । सर्वोपकरणैः सांग्रामिकैः सर्वायुधैरुपेतमस्मत्स्यंदनमुपनय ।

सूतः । यदाज्ञापयति कुमारः । [ इति निष्क्रांतः ] ।

कृपः । वत्स अवश्यप्रतिकर्तव्योऽस्मिन्दारुणे परिभवाग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामंतरेण शक्तः प्रतिकर्तुम् ।

अश्वत्थामा । किमतः परम् ।

कृपः । सैनापत्येऽभिषिक्तं भवंतमिच्छामि समरभुवमवतारयितुम् ।

अश्वत्थामा । मातुल परतंत्रमिदमकिंचित्करं च ।

कृपः । वत्स न खलु परतंत्रं नाकिंचित्करं च । पश्य ।

भवेदभीष्ममद्रोणं धृतराष्ट्रबलं कथम् ।
यदि तत्तुल्यकर्मात्र भवान्धूर्यो न युज्यते ॥ ११ ॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपंथीभवितुं किंपुनर्युधिष्ठिरबलम् । तदेवं मन्ये । परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामेवाभ्युदीणक्षमास्तिष्ठतीति ।

अश्वत्थामा । यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय । तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयंग्रहणप्रणयसमाश्वासनया मंदसंतापं करोमि ।

कृपः । वत्स एवमिदम् । अतस्तमेवोद्देशं गच्छावः ।

( इति परिक्रामतः ) ।

## XVII.

### The heroic and fiery-tempered Asvatthaman.
### Part II.

( ततः प्रविशतः कर्णदुर्योधनावासनस्थौ )।

**दुर्योधनः** । अंगराज ।

तेजस्वीरिपुहतबंधुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतानिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ १ ॥

अथवा सूक्तमिदमाभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः शोकांधचेतसा तेन विमुच्य क्षत्रधर्मकार्कश्यं द्विजातिसुलभो मार्दवपरिग्रहः कृतः ।

**कर्णः** । राजन्कौरवेश्वर न खल्विदमेवम् ।

**दुर्यो.** । कथं तर्हि ।

**कर्णः** । एवं किल द्रोणस्याभिप्राय आसीद्यथाश्वत्थामा मया पृथिवीराज्योभिषेक्तव्य इति । तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान् ।

**दुर्यो.** । ( सशिरः कंपम् ) एवमिदम् ।

**कर्णः** । एतदर्थं च कौरवपांडवपक्षपातप्रवृत्तमहासंग्रामस्य राजकस्य परस्परक्षयमुपेक्षमाणेन तेन प्रधानपुरुषवध उपेक्षा कृता ।

**दुर्यो.** । उपपन्नमिदम् ।

**कर्णः** । न चायं ममैकस्याभिप्रायः । अन्येऽभियुक्ता अपि नैवेदमन्यथा मन्यंते ।

**दुर्यो.** । एवमेतत् । कः संदेहः ।

दत्त्वाभयं सोऽतिरथी वध्यमानं किरीटिना ।
सिंधुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ २ ॥

( तत उपसर्पतः कृपाश्वत्थामानौ ) ।

**दुर्यो.** । ( दृष्ट्वा ) । अये कथं कृपोऽश्वत्थामा च ।

( आसनादवतीर्य ) । गुरो अभिवादये ( अश्वत्थामानं प्रति ) । आचार्यपुत्र एहि परिष्वजस्व माम् ।

( आलिंग्य पार्श्वे उपवेशयति । अश्वत्थामा बाष्पमुत्सृजति ) ।

**कर्णः** । द्रौणायने अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

**दुर्यो.** । आचार्यपुत्र को विशेष आवयोरस्मिन्व्यसनार्णवे । पश्य

तातस्तव प्रणयवान्स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि ।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३ ॥

**अश्व.** । राजन्नेवं पक्षपातिनि त्वयि युक्तमेव शोकभारो लघूकर्तुम् । किंतु

मयि जीवति मत्तातः केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यंति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ ४ ॥

**कर्णः** । द्रौणायने किमत्र क्रियते यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजतैतादृशीमवस्थामात्मा नीतः ।

**अश्व.** । अंगराज किमाह भवान् । किमत्र क्रियत इति । श्रूयतां यत्क्रियते ।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुबलः पांडवीनां चमूनां
यो यः पांचालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधांधस्तस्य तस्य स्वयमिह जगतामंतकस्यांतकोहम् ॥ ५ ॥

**दुर्यो.** । आचार्यपुत्र तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम् ।

**कृपः** । राजन्सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः ।

तदहमेवं मन्ये । भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः । किं पुनर्युधिष्ठिरबलम् । अतोऽभिषिच्यतां सैनापत्ये ।

**दुर्यो.** । सुष्ठु युज्यमानमभिहितं युष्माभिः । किं तु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य ।

**कृपः** । राजन् असदृशपरिभवशोकसागरे निमज्जंतमेनमंगराजस्यार्थे नैवोपेक्षितुं युक्तम् । अस्यापि च तदेवारिकुलमनुशासनीयम् । अतः किमस्य पीडा न भविष्यति ।

**अश्व.** । राजन्कौरवेश्वर किमद्यापि युक्तायुक्तविचारणया ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपांडवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना
व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥ ६ ॥

**कर्णः** । द्रोणात्मज वक्तुं सुकरमिदमध्यवसितुं दुष्करम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः ।

**अश्व.** । अंगराज एवम् । बहवः कौरवबले शक्ताः । किं तु दुःखोपहतः शोकावेशाद्ब्रवीमि । न पुनर्वीरजनाधिक्षेपेण ।

**कर्णः** । मूढ दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य संग्रामावतरणमुचितम् । नैवंविधाः प्रलापाः ।

**अश्व.** ( सक्रोधम् ) । अरेरे राधागर्भभारभूत सूतापसद किमेवमाक्षिपसि ।

**कर्णः** । सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ ७ ॥

**अश्व.** । किमाह भवान् । ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण ।

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं

संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ।
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण किम् ॥८॥

**कर्णः** (सक्रोधम्) । अरेरे वाचाट वृथाशस्त्रग्रहणदुर्विदग्ध बटो ।

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम्
यथा पांचालभीतेन पित्रा ते बाहुशालिना ॥ ९ ॥

**अश्व.** ( सक्रोधम् ) । अरे रथकारकुलकलंक राधागर्भभारभूत आयुधानभिज्ञ तातमप्याधिक्षिपासि । अथवा

स भीरुः शूरो वा प्रथितभुजसारास्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा ॥ १० ॥

**कर्णः** ( विहस्य ) । एवं भीरुरहम् । त्वं पुनर्विक्रमैकरसः तव पितरमनुस्मृत्य महान्मे संशयो जातः । अपि च रे मूढ

यदि शस्त्रमुज्झितमशस्त्रपाणयो न निवारयंति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ ११ ॥

**अश्व.** ( सक्रोधं सकंपं च ) । दुरात्मन् राजवल्लभप्रगल्भ सूतापसद असंबद्धप्रलापिन्

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ १२ ॥

( इति तथा कर्तुमुत्तिष्ठति )

**कृपदुर्योधनौ** । गुरुपुत्र मर्षय मर्षय । ( इति वारयतः ) ।

( अश्वत्थामा चरणप्रहारं नाटयति ) ।

**कर्णः** ( सक्रोधमुत्थाय खड्गमाकृष्य ) । अरे दुरात्मन् ब्रह्मबंधो आत्मश्लाघिन्

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम् ।
अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ ॥ १३ ॥

**अश्व.**। अरे मूढ जात्या चेदवध्योऽहमियं सा जातिः परित्यक्ता ।

( इति यज्ञोपवीतं छिनत्ति ) ।

अद्य मिथ्याप्रतिज्ञोसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयांजलिम् ॥ १४ ॥

( उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ )

**दुर्यो.** । आचार्यपुत्र शस्त्रग्रहणेनालम् ।

**कृपः** । वत्स सूतपुत्र शस्त्रग्रहणेनालम् ।

**अश्व.** । मातुल मातुल किं निवारयसि । अयमपि तातनिंदा-प्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव ।

**कर्णः** । राजन्न खल्वहं निवारयितव्यः ।

उपेक्षितानां मंदानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधांधैर्भवत्येषा विकत्थना ॥ १५ ॥

**दुर्यो.** । कर्ण गुरुपत्र कोऽयमद्य युवयोर्व्यामोहः ।

**कृपः** । वत्स अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽय व्यामोहः । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पंथाः ।

**अश्व.** । मातुल न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलंकस्य दर्पः शादयितुम् ।

**कृपः** । वत्स अकालः खलु स्वबलप्रधानविरोधस्य ।

**अश्व.** । मातुल यद्येवं

अयं पापो यावन्न निधनमुपेयादरिशरैः

परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखममुं वेत्तु समरे ॥ १६ ॥
( इति खड्गमुत्सृजाति ) ।

**कर्णः** ( विहस्य ) । अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात् ।

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ १७ ॥

Venisamhâra III.

---

## XVII.

AJa's lamentaticn on the death of his wife.

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ १ ॥
कुसुमान्यपि गात्रसंगमात्प्रभवंत्यायुरपोहितुं यदि ।
न भविष्यति हंत साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥ २ ॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजांतकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ३ ॥
स्रगियं यदि जीवितापहा हृदये किं निहिता न हंति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४ ॥
अथवा मम भाग्यविप्लवादशनिः कल्पित एव वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ५ ॥
कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ६ ॥
मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबंधना रतिः ॥ ७ ॥

कुसुमोत्खचितान्वलीभृतश्चलयन्भृंगरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशांकि मे मनः ॥ ८ ॥
तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ९ ॥
इदमुच्छ्वासितालकं मुखं तव विश्रांतकथं दुनोति माम् ।
निशि सुप्तमिवैकपंकजं विरताभ्यंतरषट्पदस्वनम् ॥ १० ॥
शशिनं पुनरेति शर्वरी दयिता द्वंद्वचरं पतत्रिणम् ।
इति तौ विरहांतरक्षमौ कथमत्यंतगता न मां दहेः ॥ ११ ॥
नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदंगमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥ १२ ॥
कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ १३ ॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलंबितुं क्षमाः ॥ १४ ॥
मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्रतम् ॥ १५ ॥
कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ १६ ॥
स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ॥ १७ ॥
तव निःश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किंनरकंठि सुप्यते ॥ १८ ॥
समदुःखसुखः सखीजनः प्रतिपच्चंद्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ १९ ॥
धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।

गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ २० ॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ २१ ॥
मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे ।
अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलांजलिम् ॥ २२ ॥
विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनांतरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ २३ ॥
विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।
अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान् ॥ २४ ॥
अथ तस्य कथंचिदंकतः स्वजनस्तामपनीय सुंदरीम् ।
विससर्ज तदंत्यमंडनामनलायागुरुचंदनैधसे ॥ २५ ॥
प्रमदामनु संस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् ।
न चकार शरीरमग्निसात्सह देव्या न तु जीविताशया ॥ २६ ॥

Raghuvamsa VIII.

## XVIII.

### Advice of *S*ukanâsa to Chandrâpida.

तात चंद्रापीड विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमप्रदीपप्रभापनेयमतिगहने तमो यौवनप्रभवमित्यतो विस्तरेणाभिधीयसे। गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा। सर्वाविनयानामेकैकमप्येषामायतनं किमुत समवायः । यौवनारंभे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः । इंद्रियहरिणहारिणी च सततमतिदुरंतेयमुपभोगमृगतृष्णिका । तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतंति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासंगो विषयेषु । भवादृशा एव भवंति

भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशंति सुखमुपदेशगुणाः । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षमजलं स्नानं । नोद्वेगकरः प्रजागरः । विशेषेण तु राज्ञाम् विरला हि तेषामुपदेष्टारः । अलीकाभिमानोन्मादकारीणि धनानि । राज्यविषविकारतद्राप्रदा राज्यलक्ष्मीः ।

आलोकयतु तावल्लक्ष्मीमेव भवान्प्रथमम् । इयमनार्या लब्धापि दुःखेन परिपाल्यते । न परिचयं रक्षति । नाभिजनमीक्षते । न वैदग्ध्यं गणयति । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । न कचिन्निर्भरमाबध्नाति पदम् । यथा यथेयं दीप्यते तथा तथा कज्जलमलिनमेव कर्म केवलमुद्वमति । न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः । एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहिता विक्लवा भवंति राजानः सर्वाविनयाधिष्ठानतां च गच्छंति । तेषां दाक्षिण्यं प्रक्षाल्यते हृदयं मलिनीभवति सत्यवादितापह्रियते गुणाश्चोत्सार्यंते । केचित्संपाद्भिः प्रलोभ्यमाना रागावेशेन बाध्यमाना विह्वलतामुपयांति । आसन्नमृत्यव इव बंधुजनमपि नाभिजानंति । अदूरदर्शिनः पापेनेवाध्मातमूर्तयो भवंति । तदवस्थाश्च व्यसनशतशरव्यतामुपगताः पतितमप्यात्मानं नावगच्छंति । अपरे तु स्वार्थनिष्पादनपरैर्धूर्तं विनोद इति प्रमत्तता शौर्यमिति स्वच्छंदता प्रभुत्वमिति दोषानपि गुणपक्षमध्यारोपयाद्भिरंतः स्वयमपि हसाद्भिः प्रतारणकुशलैर्धूर्तैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतामुपयांति । दृष्टिपातमप्युपकारपक्षे स्थापयंति । स्पर्शमपि पावनमाकलयंति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमंति देवताभ्यो नाभिवादयंत्यभिवादनार्हान्नाभ्युत्तिष्ठंति गुरून् । जरावक्लव्यप्रलपितमिति पश्यंति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयंति साचि-

वोपदेशाय कुप्यंति हितवादिने। सर्वथा तमभिनंदंति तं पार्श्वे कुर्वंति तं बहु मन्यंते तमाप्ततामापादयंति योऽहर्निशमुपरचितांजलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति।

तदेवंप्राये राज्यतंत्रेऽस्मिन्महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैर्नोपालभ्यसे सुहृद्भिर्न प्रहस्यसे विटैर्नावलुप्यसे सेवकवृकैर्न प्रलोभ्यसे वनिताभिर्नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्न विकृष्यसे रागेण नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः पित्रा च महता प्रयत्नेन समारोपितसंस्कारस्तरलहृदयमप्रतिबुद्धमेव मादयंति धनानि। तथापि भगद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि धीरमप्यभिजातमपीयं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा पित्रा क्रियमाणमनुभवतु भवान्यौवराज्याभिषेकमनेकमंगलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बंधुवर्गम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति। इत्येतावदभिधायोपशशाम।

Kâdambary.

---

## XIX

The evils of anarchy.

इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम्।
अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात्॥ १॥
नाराजके जनपदे विद्युन्माली महास्वनः।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा॥ २॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे॥ ३॥
अराजके धनं नास्ति नास्ति भार्याप्यराजके।

इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ ४ ॥
नाराजके जनपदे कारयंति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ ५ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दांता ब्राह्मणाः संशितव्रताः ॥ ६ ॥
नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसंपूर्णा विसृजंत्याप्तदक्षिणाः ॥ ७ ॥
नाराजके जनपदे धनवंतः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ ८ ॥
नाराजके जनपदे शरान्संततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ ९ ॥
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छंति क्षेममध्वानं बहुपण्यसमाचिताः ॥ १० ॥
नाराजके जनपदे योगक्षेमः प्रवर्तते ।
न चाप्यराजके सेना शत्रून्विषहते युधि ॥ ११ ॥
नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदंतोवतिष्ठंते वनेषूपवनेषु वा ॥ १२ ॥
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ १३ ॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ १४ ॥
नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयंति परस्परम् ॥ १५ ॥
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पंते राजदंडनिर्पीडिताः ॥ १६ ॥
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।

तथा नरेंद्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ १७ ॥
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ १८ ॥
यमो वैश्रवणः शक्रो वरुणश्च महाबलः ।
विशिष्यंते नरेंद्रेण वृत्तेन महता ततः ॥ १९ ॥
अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभंजन्साध्वसाधुनी ॥ २० ॥

Ramayana.

---

## XX.

### Vidura's abvice to Dhritarsahtra.

### Part I.

शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद् ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ १ ॥
तस्माद्वक्ष्यामि ते राजन् हितं यत्स्यात्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ २ ॥
अनुबंधानपेक्षेत सानुबंधेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ३ ॥
अनुबंधं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ४ ॥
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दंडे न स राज्येऽवतिष्ठते ॥ ५ ॥
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ६ ॥
न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हंति जरा रूपमिवोत्तमम् ॥ ७॥

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
लोभाभिपाति ग्रसते नानुबंधमवेक्षते ॥ ८ ॥
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ९ ॥
वनस्पतेरपक्कानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ १० ॥
यस्तु पक्कमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ ११ ॥
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १२ ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथांगारकारकः ॥ १३ ॥
किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।
इति कर्माणि संचित्य कुर्याद्वा पुरुषो न वा ॥ १४ ॥
अनारभ्या भवंत्यर्थाः केचिन्नित्यं तथागताः ।
कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ १५ ॥
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ १६ ॥
यस्मात्त्रस्यंति भूतानि मृगव्याधान्मृगा इव ।
सागरांतामपि महीं लब्ध्वा स परिहीयते ॥ १७ ॥
पितृपैतामहं राज्यं प्राप्तवान्स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ १८ ॥
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धिनी ॥ १९ ॥
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं तथा ॥ २० ॥

य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ २१ ॥
धर्मेण राज्यं विंदेत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ २२ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव कांचनम् ॥ २३ ॥
सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः ।
संचिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥ २४ ॥
गंधेन गावः पश्यंति वेदैः पश्यंति ब्राह्मणाः ।
चारैः पश्यंति राजानश्चक्षुर्भ्यामितरे जनाः ॥ २५ ॥
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदंत्यपि ॥ २६ ॥
यदतप्तं प्रणमति न तत्संतापयंत्यपि ।
यच्च स्वयं नतं दारु न तत्संतापयंत्यपि ॥ २७ ॥
एतयोपमया धीरः संनमेत बलीयसे ।
इंद्राय स प्रणमते नमते यो बलीयसे ॥ २८ ॥
पर्जन्यनाथाः पशवो राजानो मंत्रिबांधवाः ।
पतयो बांधवाः स्त्रीणां ब्राह्मणा वेदबांधवाः ॥ २९ ॥
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ३० ॥
मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः ।
अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचेलतः ॥ ३१ ॥

Mahâbhârata.

---

## XXI.

### Vidura's advice to Dhritarashtra.
### Part II.

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अंतेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ १ ॥
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनंतकः ॥ २ ॥
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मंत्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ३ ॥
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामत एव सतां दमाः ॥ ४ ॥
गतिरात्मवतां संतः संत एव सतां गतिः ।
असतां च गतिः संतो न त्वसंतः सतां गतिः ॥ ५ ॥
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ ६ ॥
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बंधुभिः ॥ ७ ॥
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ८ ॥
संपन्नतरमेवान्नं दरिद्रा भुंजते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ९ ॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यंत्यपि हि काष्ठानि दरिद्राणां महीपते ॥ १० ॥
अवृत्तिर्भयमंत्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ११ ॥
ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।

ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥ १२ ॥
इंद्रियैरिंद्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ १३ ॥
योजितः पंचवर्गेण सहजेनात्मकार्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ १४ ॥
अविजित्य यथात्मानममात्यान्विजिगीषते ।
अमित्रान्वा जितामात्यः सोऽवशः परिहीयते ॥ १५ ॥
वश्येंद्रियं जितात्मानं धृतदंड विकारिषु ।
परीक्ष्यकारिणं धीरमत्यंतं श्रीर्निषेवते ॥ १६ ॥
रथः शरीरं पुरुषस्य राजन्नात्मा नियंतेंद्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दांतैः सुखं याति रथीव धीरः ॥ १७ ॥
एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादांता हयाः पथि कुसारथिम् ॥ १८ ॥
धर्मार्थौ यः परित्यज्य स्यादिंद्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ १९ ॥
अर्थानामीश्वरो यः स्यादिंद्रियाणामनीश्वरः ।
इंद्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः ॥ २० ॥
आत्मनात्मानमन्विच्छेन्मनोबुद्धींद्रियैर्यतैः ।
आत्मा ह्येवात्मनो बंधुरात्मैव रिपुरात्मनः ॥ २१ ॥
बंधुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।
स एव नियतो बंधुः स एव नियतो रिपुः ॥ २२ ॥
यः पंचाभ्यंतरान् शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवंति तम् ॥ २३ ॥
असंत्यागात्पापकृतामपापांस्तुल्यो दंडः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह संधिं न कुर्यात् ॥ २४ ॥
आक्रोशपरिवादाभ्यां विहिंसंत्यबुधा बुधान् ।

वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ २५ ॥
हिंसा बलमसाधूनां राज्ञां दंडविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥ २६ ॥
वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ २७ ॥
अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ २८ ॥
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ २९ ॥
वाक्सायका वदनान्निष्पतंति यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतंति तान्पंडितो नावसृजेत्परेभ्यः ॥ ३० ॥
यस्मै देवाः प्रयच्छंति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षंति सोऽवाचीनानि पश्यति ॥ ३१ ॥
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ३२ ॥

Mahâbhârata.

---

## XXII.

### The tale of Pururavas and Urvasi.

### Part I.

पुरा किल सोमकुलावतंसः पुरूरवा नाम राजा बभूव । स एकदा सूर्योपस्थानान्निवर्तमानः परित्रायतां परित्रायतां यः सुरपक्षपाती यस्य वा अंबरतले गतिरस्तीति करुणं क्रंदतमप्सरसां गणं ददर्श । ता अभ्युपेत्य प्रोवाच च । अलमलमाक्रंदितेन । कथ्यतां कुतो भवत्यः परित्रातव्या इति । तासामेकतमा मेनका नाम प्रत्युवाच । शृणोतु महाराजः । या तपोविशेषपरिशंकितस्य महेंद्रस्य सुकुमारं प्रहरणं रूपगर्विताया: श्रियः प्रत्यादेशः स्वर्गस्य चालंकारः सा नः प्रियसखी

उर्वशी कुबेरभवनात्प्रतिनिवर्तमाना समापत्तिदृष्टेन केशिना दानवेन चित्रलेखाद्वितीया बंदिग्राहं गृहीता । तदस्मादसुरावलेपाद्वयं परित्रातव्या इति । तच्छ्रुत्वा पूर्वोत्तरेण दिग्भागेन गतः स जाल्मो दानव इति च विज्ञाय ऐशानीं दिशं प्रत्यश्वाश्चोदयितुं सूतमादिश्य राजा ता अप्सरसः सांत्वयन्प्रोवाच । विमुच्यतां विषादो यतिष्ये वः सखीप्रत्यानयनाय । इत्युक्त्वा महता रथवेगेन तं मघोनोऽपकारिणमसुरमासादयितुं गते पुरूरव सि ताः सर्वा हेमकूटशिखरे तदागमनं प्रतिपालयंत्यस्तस्थुः । अत्रांतरे राजापि केशिनं पराभूय तद्धस्ताच्चित्रलेखाद्वितीयामुर्वशीमाच्छिद्याजगाम । उर्वशी सुरारिसंभवेन भयेन बलवत्परित्रस्ता कंचित्कालं प्रकृतिं नापद्यत । किं तु नातिचिराद्बोधः पतनकलुषां प्रसादं गृह्णतीं गंगामिव मोहेन मुच्यमानां प्रियसखीमवलोक्य चित्रलेखोवाच । सखि विश्रब्धा भव पराभूताः खलु त्रिदशपरिपंथिनो हताशाः । तच्छ्रुत्वा चक्षुषी उन्मील्योर्वशी सखीं पप्रच्छ किं महेंद्रेणेति । न महेंद्रेण महेंद्रसदृशानुभावेनानेन राजार्षिणेति सख्या कथिते सा राजानमवलोक्यात्मगतमाह । उपकृतं खलु दानवैः । राजापि तन्मनोहरं रूपं प्रेक्ष्य तद्गृहतमना नेयं तपस्विनो नारायणस्य मुनेः सृष्टिर्भवितुमर्हतीति निश्चिकाय।कुत्रेदानीं मे सखीजनो भवेदित्युर्वश्या पृष्टे राजा हेमकूटस्थिताभिः स्वसखीभिस्ते उभे संयोजयामास । ताः सर्वा अप्सरसः प्रत्यानीतां सखीं महाराजं चापारिक्षतमवलोक्य तं विजयेनावर्धापयन् । अत्रांतरे चित्ररथो नाम गंधर्वराजस्तदेव शैलशिखरमवततार । आगमनप्रयोजनं च पृष्टोऽकथयत् । वयस्य केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गंधर्वसेना समादिष्टा । ततो वयमंतरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मगवंतं द्रष्टुमर्हसि । महत्खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवतेति । राजा प्रत्युवाच । मा मैवम् । ननु वज्रिण एव वीर्यमेतद्यदस्य पक्ष्या द्विषतो विजयंते । वसुधाधर-

कदराभिसर्पी हरेः प्रतिशब्दोऽपि नागान् भिनत्ति। तथापि नायमवसरो मम शतक्रतुं द्रष्टुं त्वमेवात्रभवतीं प्रभोरंतिकं प्रापय । तथेत्युक्त्वा चित्ररथः सह सर्वाभिरप्सरोभिः प्रस्थितः। उर्वशी तु राजर्षिमामंत्रयितुमशक्नुवती चित्रलेखामुखेन महाराजेनाभ्यनुज्ञाता इच्छामि प्रियसखीमिव महाराजस्य कीर्तिं महेंद्रलोकं नेतुमिति राजानं विज्ञापयामास । तेनानुज्ञाता च लताविटप एकावली लग्ना इति सव्याजं तां मोचयितुं सखीमभ्यर्थ्य राजानमेवावलोकयंती सनिःश्वासं निष्क्रांता।

राजा तु तां सरोसुंदरीं गतामवलोक्य मदनशरपीडितस्तस्याः कृते भृशमुत्कंठितोऽभूत् । तां तस्यावस्थां दृष्ट्वा तस्य देवी काशिराजपुत्री औशिनरी नाम तस्य शून्याहृदयत्वस्य कारणं राज्ञः प्रियवयस्यान्माणवकाद्विज्ञातुं निपुणिकां नाम स्वचेटीमाज्ञापयामास। यथार्थनाम्नी सा निपुणिकाऽतिविदग्धतया भर्तृरहस्यदुर्गभेदनं कृतवती । ततो राजा रहस्यनिक्षेपरक्षणविषये माणवकेन समाश्वासित उर्वशीगतामेव कथां कुर्वन्वयस्येन सहोत्कंठाविनोदार्थं प्रमदवनं प्रविवेश । किं तु वसंतावतारसूचकं तदभिरामत्वमवलोक्य संजाताधिकतरोत्कंठः कुत्रापि धृतिं न लेभे। तस्मा.द्वयस्यमाह। कोप्युपायस्तावत् चिंत्यतां येन सफलप्रार्थने भवेयम्। यावन्माणवकः समाधिमास्थायोपायं चिंतयति तावदाकाशयानेन चित्रलेखासाहितोर्वशी प्रतिष्ठानस्य शिखाभरणभूतं राजर्षेर्भवनमुपस्थिता । ते उभे तिरस्कारिणीप्रतिच्छन्ने भूत्वा राज्ञो वयस्येन सह संलापं शृण्वत्यौ तस्थतुः। माणवको राजानमाह। भो वयस्य चिंतितो मयोपायः । स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिमालिख्यावलोकयंस्तिष्ठ । राजा प्राह । सखे उभयमप्यनुपपन्नम् । मम हृदयं कामस्येषुभिः सशल्यमतः स्वप्नसमागमकारिणीं निद्रां कथमुपलभे । अपरं च यदि तस्याः प्रतिकृतिमालिखामि तर्हि आलेख्येऽसमाप्त एव मम नयने उद्बाष्पे भवतः। अतो या मम मानसीं रुजं न वेत्ति विदित्वा वा मामवमन्यते तस्यामुर्वश्यां

मम समागममनोरथमलब्धफलनीरसं विधाय पंचबाणः सर्वथा कृती भवतु । उर्वशी तद्वचनं श्रुत्वा स्वामिन्यदि नामाहमनुरक्तस्य तवोपरि यथा त्वया संभाविता तथा परमार्थतः स्यां तर्हि किमिति नंदनवनवाता अपि ललितपारिजातशयनीये मम शरीरकेऽत्युष्णा भवेयुरिति तुल्या-नुरागपिशुनं काव्यं प्रभावनिर्मिते भूर्जपत्रे लिखित्वा राज्ञः पुरतस्तत्पत्रं न्यक्षिपत् । राजापि तद्गृहीत्वा वाचयित्वा च संजातानंदो धार्यतामयं प्रियायाः स्वहस्त इत्युक्त्वा माणवकस्य हस्ते तत्पत्रं ददौ । अत्रांतर एवोर्वशीप्रेषिता चित्रलेखा त्वद्दर्शनसमुत्थेन मदनेन बलवद्बाध्यमानाहं भूयोऽपि महाराजेनानुकंपनीया इति प्रियसख्या विज्ञप्तिं राज्ञे निवेद-यामास । सोऽपि तदधिकतरं मदनेन पीड्यमानस्तां विज्ञप्तिं परमाल्हा-देनानुमेने । यावदुर्वशी राजानं प्रणम्योपविशति तावदेव चित्रलेखे त्वरयोर्वशीं यतो भरतेन मुनिना भवतीषु यः प्रयोगो नियुक्तस्तमर्थं सलोकपालो मरुतां भर्ता द्रष्टुमना इति देवदूताह्वानं ते अशृणुतां राज्ञा-नुज्ञाते च स्वर्गमगच्छताम् । गतायां तस्यां राजा वैयर्थ्यमिव संप्राप्तिं चक्षुष इति संप्रधार्य तद्भूर्जपत्रावलोकनेन दृष्टिं विलोभयितुकामो माण-वकमाह । उपनय भूर्जपत्रमिति । किं तु माणवकस्य प्रमादेन तत्पत्रं तस्य हस्ताद्भ्रष्टं भर्तारं द्रष्टुमायांत्या देव्या औशीनर्या समासादितं तद्गताक्षरार्थं च परिज्ञाय सेर्ष्यया तया इतस्ततस्तदन्वेषणपरस्य तस्य पुरत एव सहसानीय प्रक्षिप्तम् । राजा तु लोप्त्रेण गृहीतः कुंभीरक इव प्रतिवचनं दातुमसमर्थ आत्मनः सौभाग्यं प्रच्छादयितुं कथं कथमपि प्रायतत । देवीं तु कुपितां दृष्ट्वाऽपराधी नामाहं प्रसीद रंभोरु विरम संरंभादित्यादिवचनैस्तां सप्रणिपातमनुनेतुं प्रवृत्तः । किं तु तत्प्रणिपात-मवधूय प्रावृण्नदीवाप्रसन्ना सा सपरिवारा निष्क्रांता । अनेन समयेन गतमर्धं दिवसस्य तस्मात्स्नानभोजनं सवितुं राजा सत्वरस्यांतःपुरमेव प्राविशत् ।

भरतमुनिप्रयोगं द्रष्टुमना महेंद्र उर्वशीं ससखीमाह्वाययदिति प्रागुनिर्दिष्टमेव। तथा च तस्य पुरतः सरस्वतीकृतलक्ष्मीस्वयंवरनामके काव्यबंधेऽभिनीयमाने तेषु तेषु रसेषु परिषत्तन्मय्यासीत्। किं तु भावितव्यतानुविधायीनींद्रियाणीति वचनानुरोधादुर्वश्या वचनमेकस्मिन् स्थले प्रमादस्खलितमासीत्। यतो लक्ष्मीभूमिकायां वर्तमानोर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा। सखि समागता एते सकेशवा लोकपालाः कतमास्मिंस्ते भावाभिनिवेश इति। ततस्तया पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी। तां श्रुत्वा भरतः क्रुद्धस्तां शशाप येन ममोपदेशस्त्वया लंघितस्तेन न ते दिव्यं स्थानं भविष्यतीति। महेंद्रेण पुनः प्रेक्षणावसाने लज्जावनतमुखी सा भणिता। यस्मिन् बद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम्। अतस्त्वं यथाकामं पुरूरवसमुपतिष्ठ यावत्स त्वयि दृष्टसंतानो भवेदिति। तदादेशानुरोधादुर्वशी अस्तमिते सूर्ये पुरूरवसमुपस्थातुकामाऽल्पाभरणभूषितं नीलांशुकपरिग्रहमाभिसारिकावेषं परिधाय ससखी परिवर्तितमिव कैलासशिखरं प्रियतमस्य भवनमुपगता। तदा राजा वयस्येन सह स्वामवस्थामेवोद्दिश्य स्वैरालापं कुर्वाणस्तया दृष्टः। यदा चाहमेवास्योत्कंठाहेतुरिति तस्याः संशयच्छेदो जातस्तदा तमुपगंतुमियेष। किं तु तत्क्षण एव इत इतो देवीति वचनं श्रुत्वा परं विषादमगमत्। किंनूपवासनियमवेषा राजार्षिमहिषी दृश्यते तन्नैषा चिरमिह स्थास्यतीति चित्रलेखया समाश्वासिता तथैव तिरस्करिणीप्रतिच्छन्नातिष्ठत्। एवमवस्थितायां तस्यां देवी अवधूतार्यपुत्रप्रणिपाता पश्चात्संतप्यमानसापि प्रियानुप्रसादननामकव्रतोपदेशेनोपचारातिक्रमं प्रमार्ष्टुकामा तत्रैवागता। तां दृष्ट्वा राजाऽन्यसंक्रांतप्रेमाऽधिकतरमेव देव्यां दक्षिणोऽभूत्। देव्यपि व्रतानुरूपं गंधपुष्पादिभिरादौ चंद्रपादानभ्यर्च्य पश्चाद्राजानं च पूजयित्वा प्रांजलिः प्रणिपत्याह। एषाहं

देवतामिथुनं रोहिणींमृगलांछनं साक्षीकृत्यार्यपुत्रमनुप्रसादयामि । अद्य-प्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते या चार्यपुत्रसमागमप्रणयिनी तया सह मया प्रीतिबंधेन वर्तितव्यामिति । इदं देवीवचनं श्रुत्वा माणवकोऽपवार्याह । छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भवति धर्मो मे भविष्यतीति । प्रकाशं च देवीमाह । भवति किं तादृशः प्रियस्तत्रभवान् । देव्याह । मूढ अहं खल्वात्मनः सुखावसानेनार्यपुत्रं निर्वृतशरीरं कर्तुमिच्छामि । एतावता चिंतय तावत्प्रियो न वेति । एवमुक्त्वा निष्क्रांता देवी । उर्वश्यपि महानुभावया देव्या अभ्यनुज्ञातोऽनंतरायो मे प्रियसमागमो भविष्यतीति मन्यमाना राजानं सहसोपसृत्य जयशब्दमुदीरयामास । तेन चाभिनंदिता तस्यैवासन उपाविष्टा । वयस्य वसंतानंतर उष्णसमये भगवान् सूर्यो मयोपचरितव्यस्तद्यथेयं मे प्रियसखी स्वर्गस्य नोत्कंठते तथा त्वया कर्तव्यमिति राजानं विज्ञाप्य चित्रलेखा गता । राजापि तथेति प्रतिपद्य मनोरथसंपत्त्या हर्षनिर्भरः कंचित्कालं प्रदोषरमणीयांश्चंद्रपादान् सेवित्वा वासगृहं प्रविवेश ।

Vikramorvasiyam.

---

## XXIII.

### The tale of Pururavas and Urvasi.

### Part II.

अथ समतिक्रांतेषु केषुचिद्दिवसेषु उर्वशी तं राजर्षिममात्यनिवेशितुराज्यधुरं गृहीत्वा गंधमादनवनं विहर्तुं गता । तत्र खलु मंदाकिन्याः पुलिनेषु स्थिता सिकतापर्वतकेलीभिः क्रीडंती विद्याधरदारिका उदयवती नाम तेन राजर्षिणा निध्यातेति कुपितोर्वशी यतो दूरारूढः प्रणयोऽसहनः । ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा प्रवेशानंतरमेव च काननोपांतव-

तिलताभावेन परिणतमस्या रूपम् । अथ स राजर्षिस्तस्मिन्नेव कानने प्रियतमां विचिन्वन्नहोरात्रमतिवाहयामास । प्रथमं तावत्तस्य प्रियया वियोग एकपद उपनतः । अपरं च निर्वृतानामप्युत्कंठाकारी जलदसमयः संप्राप्तः । तेन तस्य दुःखं दुःखानुबंधीव संजातम् । तथा चोन्मत्त इव तस्मिन्वने यत्किंचित्तस्य दृष्टिपथमाययौ तत्प्रियाप्रवृत्तिं सोत्सुकं पप्रच्छ । एवं तेन मयूरः परभृता राजहंसश्चक्रवाको मधुकरो नागराजः शिलोच्चयः सरित्कृष्णसारश्च क्रमेणाभ्यर्थिताः । किं तु स सर्वत्र भग्नाशो बभूव । एवं प्रियान्वेषणार्थं परिभ्रमन्नेकदा रक्ताशोकस्तबकसमरागं कमपि शिलाभेदांतरगतं मणिं ददर्श । स च संगमनीयो नाम मणिः शैलसुताचरणरागसमुद्भवो धार्यमाणश्चाचिरात्प्रियजनेन संगममावहतीति केनापि मुनिनानुशिष्टस्तं गृहीत्वा पुनः परिचक्राम । अंते स एकां कुसुमरहितां लतां दृष्ट्वा तां स्वप्रियानुकारिणीं च मत्वा आलिंगितुं प्रवृत्तः । स्पृष्टमात्रायां लतायां तत्स्थान एवोर्वशी प्रादुर्भूता । राजा तां विलोक्य दिष्ट्या गतासुना चेतनेव त्वं मया प्रत्युपलब्धासि त्वद्दर्शनादेव प्रसन्नबाह्यांतःकरणो ममांतरात्मा तत्कथय कथमियंतं कालमवस्थिता मया विना भवतीति तामुवाच । उर्वशी प्रत्युवाच । शृणोतु महाराजः । भगवता कुमारेण शाश्वतं कुमारव्रतं गृहीत्वाऽकलुषो नाम गंधमादनकच्छोऽध्यासितः कृतश्चैव विधिः । यैतं प्रदेशं स्त्री प्रवेक्ष्यति सा लताभावेन परिणंस्यति गौरीचरणसंभवं मणिं विना ततो न मोक्ष्यत इति । साहं गुरुशापसंमूढहृदया देवतासमयं विस्मृत्य कुमारवनं प्रविष्टा प्रवेशानंतरमेव वासंतीलता संवृत्तेति । तन्निशम्य राजा प्राह सर्वमुपपन्नमधुना । शयने सुप्तमपि मां या प्रवासगतं मन्यसे सा त्वं मदीयं चिरवियोगं कथं सहेथाः । इदं तद्यथाकथितं त्वत्संगमनिमित्तं मुनेरुपलभ्य मणिप्रभावात्त्वमासादिताऽस्माभिरिति वदन्मणिं तामदर्शयत् । सा तं गृहीत्वा मूर्ध्न्यवहद्राजानं चोवाच । महान्खलु का-

लस्तव प्रतिष्ठानान्निर्गतस्य। तदोहि निवर्तावह इति भर्त्रासहिता विमानतां गमितेन नवेन पयोमुचा राजधानीमाससाद ।

उर्वशीसहितं महाराजं चिरस्य कालस्य प्रतिनिवृत्तमवलोक्याखिलाः प्रजाः सप्रजा ननंदुः । ताभिः स ससत्कारोपचारैरनुरज्यमानश्च राज्यमशिषत् । संतानं वर्जयित्वा न तस्य किमपि हीनम् । एकदा तु तिथिविशेष इति सांतःपुरो गंगायमुनयोः संगमे कृताभिषेक उपकार्यां प्रविष्टः । अत्रांतर एव दुकूलोत्तरच्छदे तालवृंताधारे निक्षिप्य कयापि दास्या नीयमान संगमनीयमणिरामिषशंकिना गृध्रेणाक्षिप्तः । तदवलोक्यासमाप्तनेपथ्य एव राजा सावेगं प्राह । आत्मनो वधमाहर्ता कासौ विहगतस्करः । येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् । यावच्चापमादाय तं गृध्रं हंतुमियेष तावत्सोऽदृश्यो बभूव । अतः सायं निवासवृक्षाश्रयिणं विहगदस्युं विचेतुं नागरिकमादिदेश । समनंतरमेव कंचुकी सशरं मणिमादाय राज्ञेऽदर्शयत् । आह च । त्वद्बलेन मार्गणतां गतेन निर्भिन्नतनुः स वध्योऽपराधोचितं प्राप्यांतरिक्षात्समौलिरत्नः पतित इति । राजा मणिमग्निशुद्धं कृत्वा पेटकं प्रवेशयेति किरातीमादिश्य कंचुकिनं पप्रच्छ । अपि जानीते भवान्कस्यायं बाण इति । स आह । नामांकितो दृश्यते किंतु न मे वर्णविचारक्षमा दृष्टिरिति राज्ञ शरमुपानयत् । राजा तस्मिन्निमानि नामाक्षराण्यपश्यत् । उर्वशीसंभवस्यायमैलसूनोर्धनुष्मतः । कुमारस्यायुषो बाणः प्रहर्तुर्द्विषदायुषाम् ।। इति ।। तानि वाचयित्वा स वयस्यमाह । सखे कथमेतत् । अन्यत्र नैमिषेयसत्रादवियुक्तोऽहमुर्वश्या । न च मया गर्भव्यक्तिरालक्षिता कुत एव प्रसूतिः केवलं । कानिचिद्दिनानि तस्या वपुः पांडुराननच्छायमलसेक्षणं चाभूत् । माणवक आह । मा भवान्सर्वं मानुषीधर्मं दिव्यासु संभावयतु प्रभावनिगूढानि तासां चरितानि । राजा प्रोवाच । अस्तु तावदेवं यथा भवानाह पुत्रसंवरणे

किमिव कारणं तत्रभवत्याः । माणवकः प्रत्युवाच । को देवतारहस्यानि तर्कयिष्यति । इति तयोः संलापे प्रवर्तमाने कंचुकी प्रविश्याह । देव च्यवनाश्रमात्कुमारं गृहीत्वा तापसी संप्राप्ता देवं द्रष्टुमिच्छति । अविलंबितमुभावपि प्रवेशयेत्यादिष्टः कंचुकी तथाकरोत् । माणवकः कुमारं विलोक्योवाच । किं नु खलु स एष तत्रभावान् क्षत्रियकुमारो यन्नामांकितो गृध्रलक्ष्यवेधी नाराचः । तथा बहुतरं भवंतमनुकरोति । राजा प्राह । स्यादेवम् । अतः खलु मम दृष्टिरस्मिन्निपतिता बाष्पायते वात्सल्यबंधि हृदयं मनसः प्रसादश्च । एनं चादयं परिरब्धुमिच्छामि । राज्ञाऽभिवादिता तापसी सोमवंशविस्तारयिता भवेत्याशिषं प्रयुयुजे कुमारं च प्राह जात प्रणम ते गुरुम् । कुमारस्तथा कृत्वोपविष्टः । ततो राजा तापसीं पप्रच्छ भगवति किमागमनप्रयोजनम् । तापसी प्रत्युवाच । शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत्क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितं गृहीतविद्यो धनुर्वेदेऽभिविनीतः । अद्य पुष्पसमिदर्थमृषिकुमारकैः सह गतेनानेनाश्रमविरुद्धमाचरितं यदनेन गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य । तत उपलब्धवृत्तांतेन भगवता च्यवनेनाहं समादिष्टा निर्यातय हस्तन्यासमिति । तदिच्छाम्युर्वशीं प्रेक्षितुमिति । राज्ञाहूतामुर्वशीं तापसी प्राह । एष गृहीतविद्य आयुः सांप्रतं कवचधरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । अधुना विसर्जय मामपरुध्यते ममाश्रमधर्मः । उर्वशी तु तच्चिरदर्शनेनाधिकतरमवितृष्णा सती कथं कथमपि तां विससर्ज । राजा पुत्रवतीं भार्यां प्रेक्ष्य सानंदमाह । कल्याणि पौलोमीसंभवेन जयंतेन पुरंदर एवाद्याहममुना तव सत्पुत्रेण पुत्रिणामग्र्यः । तद्वचः श्रुत्वोर्वशी सहसा रोदितुमारेभे । कारणं पृष्टा प्रत्युवाच । महाराज प्रथमं पुत्रदर्शनेन विस्मृतवत्यस्मि । इदानीं महेंद्रसंकीर्तनेन समयो मम

हृदयमायासयाति । स समयस्त्वेवंविधः । अहं पुरा महाराजगृहीतहृदया महेंद्रेणाज्ञप्ता यदैष मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं प्रेक्षिष्यते तदा त्वया भूयोपि मम समीपमागंतव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमपद आर्यायाः सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः । अद्य पितुराराधनसमर्थः संवृत्त इति कलयंत्या निर्यातितो मे दीर्घायुः । तदेतावान्मे महाराजेन संवास इति । तच्छ्रुत्वा राजा दैवस्य सुखप्रत्यर्थितां निंदन् प्रियामाह । सुलभवियोगा परवत्तात्मप्रियाणि कर्तुं न प्रभवति । अतस्त्वं भर्तुः शासने तिष्ठ । अहमपि तव सूनवायुषि न्यस्तराज्यो विचरितमृगयूथानि वनान्याश्रयिष्ये । इति निश्चित्य कुमारस्यायुषोऽभिषेकसंभाराः क्रियंतामित्यमात्यपरिषदमादिदेश । तस्मिन्नेव क्षणे भगवान्नारद आकाशादवतीर्णः सर्वैस्तैरर्घ्यादिभिरुपचारैः पूजित आसनं परिगृह्य राजानमुवाच । श्रूयतां महेंद्रसंदेशः । प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवंतमनुशास्ति । त्रिकालदर्शिभिर्मुनिभिरादिष्टः सुरासुरसंगरो भावी । भवांश्च सांयुगीनः सहायो नः । तेन त्वया न शस्त्रं संन्यस्तव्यम् । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति । तच्छ्रुत्वोर्वशी हृदयाच्छल्यमपनीतमिव मेने । राजाप्युवाच । परवानस्मि देवेश्वरेण । नारदस्तमभिनंद्याह । युक्तम् । त्वत्कार्यं वासवः कुर्यात्त्वं च तस्येष्टमाचरेः । सूर्यस्तेजसाऽग्निं समेधयत्यग्निः सूर्यं च । इत्युक्त्वा कुमारमायुषं स्वहस्तेनैव यौवराज्येऽभिषिषेच राजानं पप्रच्छ च । किं ते भूयः पाकशासनः प्रियं करोतु । राजोवाच । यदि मे मघवा प्रसन्नः किमतः परमिच्छामि । तथापीदमस्तु भरतवाक्यम् ।

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
संगतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम् ॥

Vikramorvasiyam.

---

## XXIV.

### Rama's return journey from Lanka to Ayodhya.

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥ १ ॥
वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमंबुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ २ ॥
गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरंगे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥ ३ ॥
नाभिप्ररूढांबुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगांतोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ४ ॥
पक्षच्छिदा गोत्रभिदात्तगंधाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयंते ॥ ५ ॥
एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात्कूलं फलावर्जितपूगमालम् ॥ ६ ॥
अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममंडलानि ॥ ७ ॥
सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नुपूरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविंदविश्लेषदुःखादिव बद्धमौनम् ॥ ८ ॥
त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
अदर्शयन्वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ ९ ॥
एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यंबरलेखि शृंगम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ १० ॥
उपांतवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पंपासलिलानि दृष्टिः ॥ ११ ॥
अत्रावियुक्तानि रथांगनाम्नामन्योन्यदत्तोत्पलकेसराणि ।
द्वंद्वानि दूरांतरवर्तिना ते मया प्रिये सस्पृहमीक्षितानि ॥ १२ ॥

एषा त्वया पेशलमध्ययापि घटांबुसंवर्धितबालचूता ।
आनंदयत्युन्मुखकृष्णसारा दृष्टा चिरात्पंचवटी मनो मे ॥ १३ ॥
अत्रानुगोदं मृगयानिवृत्तस्तरंगवातेन विनीतखेदः ।
रहस्त्वदुत्संगनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः ॥ १४ ॥
भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलांभः परिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ १५ ॥
हविर्भुजामेधवतां चतुर्णां मध्ये ललाटं तपसतसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दांतः ॥ १६ ॥
अदः शरण्यं शरभंगनाम्नस्तपोवनं पावनमाहिताग्नेः ।
चिराय संतर्प्य समिद्भिरग्निं यो मंत्रपूतां तनुमप्यहौषीत् ॥ १७ ॥
छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेष्वमीषु ।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ १८ ॥
धारास्वनोद्गारिदरीमुखोऽसौ शृंगाग्रलग्नांबुदवप्रपंकः ।
बध्नाति मे बंधुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ १९ ॥
एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरांतरभावतन्वी ।
मंदाकिनी भाति नगोपकंठे मुक्तावली कंठगतेव भूमेः ॥ २० ॥
अयं सुजातोऽनुगिरं टमालः प्रवालमादाय सुगंधि यस्य ।
यवांकुरापांडुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥ २१ ॥
अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्तयामास किलानसूया त्रिस्रोतसं त्र्यंबकमौलिमालाम् ॥ २२ ॥
त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥ २३ ॥
क्वचित्प्रभालेपिभिरिंद्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपंकजानामिंदीवरैरुत्खचितांतरेव ॥ २४ ॥
क्वचित्खगानां प्रियमानसानां कादंबसंसर्गवतीव पंक्तिः ।
अन्यत्र कालागरुदत्तपत्रा भक्तिर्भुवश्चंदनकल्पितेव ॥ २५ ॥

क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रंध्रेष्विवालक्ष्यनभःप्रदेशा ॥ २६ ॥
क्वचिच्च कृष्णोरगभूषणेव भस्मांगरागा तनुरीश्वरस्य ।
पश्यानवद्यांगि विभाति गंगा भिन्नप्रवाहा यमुनातरंगैः ॥ २७ ॥
पुरं निषादाधिपतेरिदं तद्यस्मिन्मया मौलिमणिं विहाय ।
जटासु बद्धास्वरुदत्सुमंत्रः कैकेयि कामाः फलितास्तवेति ॥ २८ ॥
जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरंगमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ २९ ॥
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसंतं शिशिरानिलैर्मां तरंगहस्तैरुपगूहतीव ॥ ३० ॥

Raghuvamsa XIII.

---

## XXV.

### Another foundling.

अथ कदाचिदेकेन तापसेन राजलक्षणविराजितं कंचिन्नयनानंदकरं सुकुमारं कुमारं राज्ञे समर्प्यावोचि । भूवल्लभ कुशसमिदानयनाय वनगतेन मया काचिदशरण्या व्यक्तकार्पण्याश्रु मुंचंती वनिता विलोकिता । निर्जने वने किंनिमित्तं रुद्यते त्वयेति पृष्टा सा करसरोरुहैरश्रु प्रमृज्य सगद्गदं मामवोचत् । मुने लावण्यजितपुष्पसायके मिथिलानायके पुत्रदारसमन्विते पुष्पपुरमुपेत्य कंचन कालमधिवसति समाराधितगिरिशो मालवाधीशो मगधराजं योद्धुमभ्यगात् । तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबले सति विदेहे विदेहेश्वरः प्रहारवर्मा जयवता रिपुणाभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत् । ततो वनमार्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूलबलाभिरक्षितावरोधः स पलायिष्ट । तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पिताहं मद्दुहि-

तापि तन्निगार्ति भूपतिमनुगंतुमक्षमे अभूव । तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं मामाघ्रातुमागतवान् । भीताहमुदग्रग्राव्णि स्खलंती पर्यपतम् । मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान्बाणो बाणासनयंत्रमुक्तोऽपाहरत् । विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत । कुमारमपरमुद्वहंती मद्दुहिता कुत्र गता न जाने । साहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाभवम् । ततः स्वस्थीभूय भूयः क्ष्माभर्तुरंतिकमुपतिष्ठासुरसहायतया दुहितुरनभिज्ञतया च व्याकुलीभवामि । इत्यभिदधाना एकाकिन्यपि स्वामिनं गमिष्यामीति सा तदैव निरगात् । अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवंस्तदन्वयांकुरं कुमारमन्विष्यंस्तदैकं चंडिकामंदिरं सुंदरं प्रागाम् । तत्र सततमेवंविधविजयसिद्धये कुमारं देवतोपहारं करिष्यंतः किराता मया समभ्यभाष्यंत । ननु किरातोत्तमा घोरप्रचारे कांतारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं क्वचिच्छायायां निक्षिप्य मार्गान्वेषणाय किंचिदंतरमगच्छम् । स कुत्र गतः केन वा गृहीत इति परीक्ष्यापि न वीक्षते । तन्मुखालोकनेन विनानेकान्यहान्यतीतानि । किं करोमि क्व यामि भवद्भिर्न किमदर्शीति । द्विजोत्तम कश्चिदत्र तिष्ठति । किमेष तव नंदनः सत्यमेव तदेनं गृहाणेत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन् । तेभ्यो दत्ताशीरहं बालकमंगीकृत्य शिशिरोदकादिनोपचारेणाश्वास्य निःशंकं भवदंकं समानीतवानस्मि । एनमायुष्मंतं पितृरूपो भवानभिरक्षतामिति । राजा सुहृदापन्निमित्तं शोकं तन्नंदनविलोकनसुखेन किंचिदधरीकृत्य तमुपहारवर्मनाम्नाहूय राजवाहनमिव पुपोष ।

Dasakumaracharita.

## XXVI.

### Dasaratha and Visvamitra.

अभून्नृपो विबुधसखः परंतपः श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत्स्वयम् ॥ १ ॥
सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनपारीत्सममंस्त बंधून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ २ ॥
वसूनि तोयं घनवद्व्यकारीत्सहासनं गोत्रभिदोऽध्यवात्सीत् ।
न त्र्यंबकादन्यमुपास्थिताऽसौ यशांसि सर्वेषु भृतां निरास्थत् ॥ ३ ॥
पुण्यो महाब्रह्मसमूहजुष्टः संतर्पणो नाकसदां वरेण्यः ।
जज्वाल लोकस्थितये स राजा यथाऽध्वरे वह्निरभिप्रणीतः ॥ ४ ॥
स पुण्यकीर्तिः शतमन्युकल्पो महेंद्रलोकप्रतिमां समृद्ध्या ।
अध्यास्त सर्वर्तुसुखामयोध्यामध्यासितां ब्रह्मभिरिद्धबोधैः ॥ ५ ॥
निर्माणदक्षस्य समीहितेषु सीमेव पद्मासनकौशलस्य ।
ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या स्थितावहस्येव पुरं मघोनः ॥ ६ ॥
धर्म्यासु कामार्थयशस्करीषु मतासु लोकेऽधिगतासु काले ।
विद्यासु विद्वानिव सोऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु ॥ ७ ॥
पुत्रीयता तेन वरांगनाभिरानायि विद्वान् क्रतुषु क्रियावान् ।
विपक्त्रिमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृंगः ॥ ८ ॥
ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनींद्रम् ।
ज्ञाताशयस्तस्य ततो व्यतानीत्स कर्मठः कर्म सुतानुबंधम् ॥ ९ ॥
निष्ठां गते दत्रिमसभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः ।
प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्रः प्रसोतुं चतुरस्तु पुत्रान् ॥ १० ॥
कौशल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत् ।
प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन ॥ ११ ॥
आर्चीद् द्विजातीन्परमार्थविंदानुदेजयान्भूतगणान् न्यषेधीत् ।
विद्वानुपानेष्ट च तान्स्वकाले यतिर्वसिष्ठो यमिनां वरिष्ठः ॥ १२ ॥

वेदोऽगवांस्तौराखिलोऽध्यगायि शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्नवृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः ॥१३॥
ततोऽभ्यगाद्गाधिसुतः क्षितींद्रं रक्षोभिरभ्याहतकर्मवृत्तिः ।
रामं वरीतुं परिरक्षणार्थं राजार्जिहत्तं मधुपर्कपाणिः ॥ १४ ॥
आख्यन्मुनिस्तस्य शिवं समाधेर्विघ्नन्ति रक्षांसि वने क्रतूंश्च ।
तानि द्विषद्वीर्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन ॥ १५ ॥
स शुश्रुवांस्तद्वचनं मुमोह राजाऽसहिष्णुः सुतविप्रयोगम् ।
अहंयुनाथ क्षितिपः शुभंयुरूचे वचस्तापसकुंजरेण ॥ १६ ॥
मया त्वमाप्थाः शरणं भयेषु वयं त्वयाप्याप्स्महि धर्मवृद्ध्यै ।
क्षात्रं द्विजत्वं च परस्परार्थं शंकां कृथा मा प्रहिणु स्वसूनुम् ॥ १७ ॥
घानिष्यते तेन महान्विपक्षः स्थायिष्यते येन रणे पुरस्तात् ।
मा मां महात्मन्परिभूरयोग्ये न मद्विधो न्यस्यति भारमग्र्यम् ॥ १८ ॥
क्रुध्यन्कुलं धक्ष्यति विप्रवह्निर्यास्यन् सुतस्तप्स्यति गां समन्युम् ।
इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ॥ १९ ॥

Bhatti-kavya I.

---

## XXVII.

### Draupadi and Yudhishthira.

इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसंनिवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसंनिधौ वचः ॥ १ ॥
निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियंतुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ॥ २ ॥
भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययंति मां निरस्तनारीसमया दुराधयः ॥ ३ ॥
अखंडमाखंडलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता मतंगजेन स्रगिवापवर्जिता ॥ ४ ॥

व्रजंति ते मूढधियः पराभवं भवंति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृतांगान्निशिता इवेषवः ॥ ५ ॥
गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥ ६ ॥
भवंतमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥७॥
अवंध्यकोपस्य विहंतुरापदां भवंति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जंतुना न जातहार्देन न विद्विषादरः ॥ ८ ॥
परिश्रमँल्लोहितचंदनोचितः पदातिरंतर्गिरिरेणुरूषितः ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥९॥
विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुना हरन्करोति मन्युं न कथं धनंजयः ॥ १० ॥
वनांतशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥ ११ ॥
इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः
विचिंतयंत्या भवदापदं परां रुजंति चेतः प्रसभं ममाधयः ॥ १२ ॥
पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमंगलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवः शिवारुतैः॥१३॥
पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदंधसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥१४॥
अनारतं यौ मणिपीठशायिनावरंजयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥ १५ ॥
द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसंपदां पराभवोऽप्युत्सव एव मानिनाम् ॥ १६ ॥
विहाय शांतिं नृप धाम तत्पुनः प्रसीद संधेहि वधाय विद्विषाम् ।
व्रजंति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥१७॥

पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हंत हता मनस्विता ॥ १८ ॥
अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सन् जुहुधीह पावकम्ः १९
न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि संधिदूषणानि २०

Kiratarjuniyam I.

---

## XXVIII.

Brahman is the efficient cause of the universe.

चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते कस्मादुपसंहारदर्शनात् । इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दंडचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः संतस्तत्तत्कार्यं कुर्वाणा दृश्यंते । ब्रह्म चासहायं तवाभिप्रेतं तस्य साधनांतरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत । तस्मान्न ब्रह्म जगत्कारणमिति चेत् नैष दोषः । यतः क्षीरवद् द्रव्यस्वभावविशेषादुपपद्यते । यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं तथेहापि भविष्यति । ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनं औष्ण्यादिकं कथमुच्यते क्षीरवदिति । नैष दोषः । स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रामनुभवत्येवं त्वार्यते त्वौष्ण्यादिना दधिभावाय । यदि च स्वयं दधिभावशीलता न स्यात् नैवौष्ण्यादिनापि बलाद् दधिभावमापद्येत । न हि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्यते । साधनसंपत्त्या च तस्य पूर्णता संपद्यते । परिपूर्णशक्तिकं तु ब्रह्म न

तस्यानेन केनचित् पूर्णता संपादयितव्या । तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात् क्षीरादिवद् विचित्रपरिणाम उपपद्यते ।

Sankarabhashya

---

## XXIX.

### The Sun--rise.

अत्रांतरे सरसजृंभिताभिन्नषड्ज-
भाषाविशेषपरिपोषितचित्रभंगि ।
पीयूषपेशलसुभाषितभाषिणीभिः
प्रत्यूषमंगलमगीयत मागधीभिः ॥ १ ॥

इयं व्रजति यामिनी त्यज नरेंद्र निद्रारसं
दरिद्राति वियद्द्रुमे कुसुमकांतयस्तारकाः ।
अयं च कुसुमायुधप्रियसुहृत्क्षणैः पंचषै-
र्भविष्यति पयोनिधेः पुलिनराजहंसः शशी ॥ २ ॥

वागुन्मीलति भिन्नषड्जललिता लीलाशुकानामपि
क्रोडे दंतकरंडपांडुरतनोर्मग्ना विधोश्चंद्रिका ।
पूर्वाशामुखमंडनत्वमचिराच्चंडांशुवरास्यति
द्रागुन्मुद्रय देवि पंकजदलच्छायांचने लोचने ॥ ३ ॥

खंडः क्षपासु कियतीष्वपि यः कृशांगि
भंगीमनंगपरशोः सदृशीं बिभर्ति ।
सोयं निमज्जति जगन्नयनाभिरामः
श्यामावधूवदनचंदनबिंदुरिंदुः ॥ ४ ॥

क्षिपति तिमिरभारं भैरवः कैरवाणा-
मुदयशिखरिलीलाशेखरोयं खरांशुः ।
अपि चकितचकोरीपीनरूपेण धाम्ना
भवति विधुरकांडे तंडुलक्षोदपांडुः ॥ ५ ॥

निक्षिप्य गंडफलकेष्विव खंडितानां-
मास्मद्युतिं दधाति पांडुरतां प्रदीपाः ।
शुष्यंति चंद्रमणयश्च मनस्विनीना-
मार्द्रस्वपक्षिणपुटेष्विव संनिवेश्य ॥ ६ ॥
त्यक्ताः शक्रसतंगजेन कथमप्याधोरणाद्विभ्यता
संक्षोभादरुणेन वन्यकरिणां व्योमांगणे पुंजिताः ।
किंचिद्गर्जदरण्यमत्तमहिषव्याकीर्णमानज्वराः
पूर्वक्ष्माधरमुत्सृजंति तुरगाः कृच्छ्रेण तिग्मद्युतेः ॥ ७ ॥
क्षिप्त्वा गुहासु तिमिरं विहितव्यलीकाः
पादान्वहंति गिरयस्तरणेः शिरोभिः ।
तन्मस्तकेषु च किमप्यभयप्रदान-
हेतोरिवार्पितकरः प्रतिभाति भानुः ॥ ८ ॥
रक्षःसंक्षयहेतुपोत्रजननाद्वंधं विधाता च यः
पाथोधेः श्वशुरत्वमेति यमुनाताप्योः प्रसूत्या च यः ।
जातः सोऽयमशेषविश्वबलभारित्नप्रदीपाकृतिः
सद्यःसंभवडिंभलोचनसुखग्राह्येण धाम्ना रविः ॥ ९ ॥

Vikramankadevacharita XI.

---

## XXX.

### Judicial procedure.

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥
श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥
अपश्यता कार्यवशाद् व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक् पृथग्दण्ड्या विवादाद् द्विगुणं दमम् ॥ ४ ॥
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥
प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ।
ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ ७ ॥
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ।
चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः ॥ ८ ॥
अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥
कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ ११ ॥
छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १२ ॥
स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ १३ ॥
प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ १४ ॥
सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ १५ ॥

Yajnavalkyasmriti II.

## XXXI.

### Miscellaneous verses.

दिगंते श्रूयंते मदमलिनगंडाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पांडित्यं प्रकटयतु कस्मिन् मृगपतिः ॥ १ ॥
पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकमेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥ २ ॥
अयि दलदरविंद स्यंदमानं मरंदं
तव किमपि लिहंतो मंजु गुंजंतु भृंगाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बांधवो गंधवाहः ॥ ३ ॥
समुपागतवति दैवादवहेलां कुटज मधुकरे मा गाः ।
मकरंदतुंदिलानामरविंदानामयं महामान्यः ॥ ४ ॥
तावत्कोकिल विरसान् यापय दिवसान्वनांतरे निवसन् ।
यावन्मिलदलिमालः कोः कोऽपि रसालः समुल्लसति ॥ ५ ॥
कमलिनि मलिनीकरोषि चेतः
किमिति बकैरवहेलिताऽनभिज्ञैः ।
परिणतमकरंदमार्मिकास्ते
जगति भवंतु चिरायुषो मिलिंदाः ॥ ६ ॥
नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।
अत्यंतसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ७ ॥
येनामंदमरंदे दलदरविंदे दिनान्यनायिषत ।
कुटजे खलु तेनेहा तेने हा मधुकरेण कथम् ॥ ८ ॥

अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ ९ ॥
पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्तुम् ।
यत्पिंषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ १० ॥
नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ ११ ॥
स्वच्छंदं दलदरविंद ते मरंदं
विंदंतो विदधतु गुंजितं मिलिंदाः ।
आमोदानथ हरिदंतराणि नेतुं
नैवान्यो जगति समीरणात्प्रवीणः ॥ १२ ॥
याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गंता कं प्रति पांथसंततिरसौ संतापमालाकुला ।
एवं यस्य निरंतराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १३ ॥
आपेदिरेऽम्बरपथं परितः पतंगा
भृंगा रसालकुसुमानि समाश्रयंते ।
संकोचमंचति सरस्त्वयि दीनदीनो
मीनो नु हंत कतमां गतिमभ्युपैतु ॥ १४ ॥
गुंजति मंजु मिलिंदे मा मालति मौनमुपयासीः ।
शिरसा वदान्यगुरवः सादरमेनं वहंति सुरतरवः ॥ १५ ॥
यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां नीतः ।
तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥ १६ ॥
गाहितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे ।
सहकार न प्रपेदे मधुपेन भवत्समं जगति ॥ १७ ॥
अपनीतपरिमलांतरकथे पदं न्यस्य देवतरुकुसुमे ।
पुष्पांतरेऽपि गंतुं वांछसि चेद् भ्रमर धन्योऽसि ॥ १८ ॥

तरुकुलसुषमापहरां जनयंतीं जगति जीवजातार्तिम् ।
केन गुणेन भवानीतात हिमानीमिमां वहसि ॥ १९ ॥
कलभ तवांतिकमागतमलिमेनं मा कदाप्यवज्ञासीः ।
अपि दानसुंदराणां द्विपधुर्याणामयं शिरोधार्यः ॥ २० ॥
न यत्र स्थेमानं दधुरतिभयभ्रांतनयना
गलद्दानोद्रेकभ्रमदलिकदंबाः करटिनः ।
लुठन्मुक्ताभारे भवति परलोकं गतवतो
हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ २१ ॥
ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातक-
स्त्वां ध्यायन् घन वासरान् कथमपि द्राघीयसो नीतवान् ।
दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि
स्वींचक्रे करकानिपातनकृपा तत्कं प्रति ब्रूमहे ॥ २२ ॥
दवदहनजटालज्वालजालाहतानां
परिगलितलतानां म्लायतां भूरुहाणाम् ।
अयि जलधर शैलश्रेणिशृंगेषु तोयं
वितरसि बहु कोऽयं श्रीमदस्तावकानः ॥ २३ ॥
साकं ग्रावगणैर्लुठंति मणयस्तीरेऽर्कबिंबोपमा
नीरे नीरचरैः समं स भगवान्निद्राति नारायणः ।
एवं वीक्ष्य तवाविवेकमथ च प्रौढिं परामुन्नतेः
किं निंदान्यथवा स्तवानि कथय क्षीरार्णव त्वामहम् ॥२४॥
किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते ।
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥ २५ ॥
इयत्यां संपत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्तानां हरसि यदि कासार सहसा ।
निदाघे चंडांशौ किरति परितोऽङ्गारनिकरं
कृशीभूतः केषामह परिहर्तासि खलु ताम् ॥ २६ ॥

भुक्ता मृणालपटली भवता निपीता-
न्यंबूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ॥ २७ ॥
प्रारंभे कुसुमाकरस्य परितो यस्योल्लसन्मंजरी-
पुंजे मंजुलगुंजितानि रचयंस्तानातनोरुत्सवान् ।
तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामंचति
त्वं चेन्मुंचसि चंचरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥२८॥
स्थितिं नो रे दध्याः क्षणमपि मदांधेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि ।
असौ कुंभिभ्रांत्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ २९ ॥
गिरिगह्वरेषु गुरुगर्वगुंफितो
गजराजपोत न कदापि संचरेः ।
यदि बुध्यते हरिशिशुः स्तनंधयो
भविता करेणुपरिशेषिता मही ॥ ३० ॥
निसर्गादारामे तरुकुलसमारोपसुकृती
कृती मालाकारो बकुलमपि कुत्रापि निदधे ।
इदं को जानीते यदयमिह कोणांतरगतो
जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥ ३१ ॥
स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने
चंचूकोटिविपाटितारपुटो यास्याम्यहं पंजरात् ।
एवं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यंतः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥ ३२ ॥
पिब स्तन्यं पोत त्वमिह मददंतावलधिया
दृगंतानाधत्से किमिति हरिदंतेषु परुषान् ।

त्रयाणां लोकानामपि हृदयतापं परिहर-
न्नयं धीरं धीरं ध्वनति नवलीलो जलधरः ॥ ३३ ॥
नीरान्निर्मलतो जनिर्मधुरता वामामुखस्पर्धिनी
वासो यस्य हरेः करे परिमलो गीर्वाणचेतोहरः ।
सर्वस्वं तदहो महाकविगिरां कामस्य चांभोरुह
त्वं चेत् प्रीतिमुरीकरोषि मधुपे तत्त्वां किमाचक्ष्महे ॥ ३४ ॥
विदुषां वदनाद्वाचः सहसा यांति नो बहिः ।
याताश्चेन्न परांचंति द्विरदानां रदा इव ॥ ३५ ॥
औदार्यं भुवनत्रयेऽपि विदितं संभूतिरंभोनिधे-
र्वासो नंदनकानने परिमलो गीर्वाणचेतोहरः ।
एवं दातृगुरोर्गुणाः सुरतरोः सर्वेऽपि लोकोत्तराः
स्यादर्थिप्रवरार्थितर्पणविधावेको विवेको यदि ॥ ३६ ॥
विश्वास्य मधुरवचनैः साधून् ये वंचयंति नम्रतमाः ।
तानपि दधासि मातः काश्यपि यास्ततवापि च विवेकः ॥३७॥
अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव काऽपि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्यहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥ ३८ ॥
आपद्गतः किल महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागरुर्दहनमध्यगतः समंता-
ल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ ३९ ॥
विश्वाभिरामगुणगौरवगुंफितानां
रोषोऽपि निर्मलधियां रमणीय एव ।
लोकंपृणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुताऽपि नितांतरम्या ॥ ४० ॥

लीलालुंठितशारदापुरमहासंपद्भराणां पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गंति चेत्पामराः ।
अद्य श्वः फणिनां शकुंतशिशवो दंतावलानां शशाः
सिंहानां च सुखेन मूर्धसु पदं धास्यंति शालावृकाः ॥४१॥
गीर्भिर्गुरूणां परुषाक्षराभि-
स्तिरस्कृता यांति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसंति ॥ ४२ ॥
वहति विषधरान् पटीरजन्मा
शिरसि मसीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलंकं
पिशुनजनं खलु बिभ्रति क्षितींद्राः ॥ ४३ ॥
सत्पूरुषः खलु हिताचरणैरमंद-
मानंदयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै-
रिंदुर्विकासयति कैरविणीकुलानि ॥ ४४ ॥
कृतमपि महोपकारं पय इव पीत्वा निरातंकः ।
प्रत्युत हंतुं यतते काकोदरसोदरः खलो जगति ॥ ४५ ॥
खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशंकिभिर्लोकैर्विषेणाशीविषो यथा ॥ ४६ ॥
वंशभवो गुणावानपि संगाविशेषेण पूज्यते पुरुषः ।
न हि तुंबीफलविकलो वीणादंडः प्रयाति महिमानम् ॥४७॥
अमितगुणोऽपि पदार्थो दोषेणैकेन निंदितो भवति ।
निखिलरसायनमहितो गंधेनोग्रेण लशुन इव ॥ ४८ ॥
किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतांधकारोत्करः ।

किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः ॥ ४९ ॥
निष्णातोऽपि च वेदांते साधुत्वं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ५० ॥
नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजंते खंड्यंते चंदनद्रुमाः ॥ ५१ ॥
शून्येऽपि च गुणावत्तामातन्वानः स्वकीयगुणजालैः ।
विवराणि मुद्रयन् द्रागूर्णायुरिव सज्जनो जयति ॥ ५२ ॥
धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च ।
यो देहमर्पयति चान्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥ ५३ ॥
हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुंबिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं तनुते मनीषाम् ॥ ५४ ॥
दीनानामिह परिहाय शुष्कशस्या-
न्यौदार्यं प्रकटयतो महीधरेषु ।
औन्नत्यं परममवाप्य दुर्मदस्य
ज्ञातोऽयं जलधर तावको विवेकः ॥ ५५ ॥
गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदंडम् ।
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ५६ ॥
व्योमनि बीजांकुरुते चित्रं निर्माति सुंदरं पवने ।
रचयति रेखाः सलिले यस्तु खले चरति सत्कारम् ॥ ५७ ॥
किमहं वदामि खल दिव्यमते
गुणपक्षपातमभितो भवतः ।

गुणशालिनो निखिलसाधुजनान्
यदहर्निशं न खलु विस्मरसि ॥ ५८ ॥

रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि ।
अथवालं पापात्मन् कृतया कथयापि ते हतया ॥ ५९ ॥

आनंदमृगदावाग्निः शीलशाखिमदद्विपः ।
ज्ञातदीपमहावायुरयं खलसमागमः ॥ ६० ॥

खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि ।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥ ६१ ॥

वदने विनिवेशिता भुजंगी
पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथावलीढा
न हि जीवंति जना मनागमंत्राः ॥ ६२ ॥

अविरतं परकार्यकृतां सतां
मधुरिमातिशयेन वचोऽमृतम् ।
अपि च मानसमंबुनिधिर्यशो
विमलशारदचंदिरचंद्रिका ॥ ६३ ॥

एत्य कुसुमाकरो मे संजीवयिता गिरं चिरं मग्नाम् ।
इति चिंतयतो हृदये पिकस्य समधायि शौभिकेन शरः ॥ ६४ ॥

निर्गुणः शोभते नैव विपुलाडंबरोपि ना ।
आपातरम्यपुष्पश्रीशोभितः शाल्मलिर्यथा ॥ ६५ ॥

पंकैर्विना सरो भाति सदः खलजनैर्विना ।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना ॥ ६६ ॥

तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरंदानामंतरेण मधुव्रतम् ॥ ६७ ॥

यथा तानं विना रागो यथा मानं विना नृपः ।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः ॥ ६८ ॥

संतः स्वतः प्रकाशंते गुणा न परतो नृणाम् ।
आमोदो न हि कस्तूर्याः शपथेनानुभाव्यते ॥ ६९ ॥
अयि बत गुरु गर्वं मास्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यंतदीनं
नकममुनैव प्राणहीनं करोषि ॥ ७० ॥
दूराकराति कुमतिं विमलीकरोति
चेतश्चिरंतनमघं चुलुकीकरोति ।
भूतेषु किं च करुणां बहुलीकरोति
संगः सतां किमु न मंगलमातनोति ॥ ७१ ॥
अनवरतपरोपकारव्यग्रीभवदमलचेतसां महताम् ।
आपातकाटवानि स्फुरंति वचनानि भेषजानीव ॥ ७२ ॥
मृतस्य लिप्सा कृपणस्य दित्सा
विमार्गगायाश्च रुचिः स्वकांते ।
सर्पस्य शांतिः कुटिलस्य मैत्री
विधातृसृष्टौ न हि दृष्टपूर्वा ॥ ७३ ॥

Bhaminivilasa I.

# द्वितीयावलिः

## SECOND SERIES.



### I.

A jackal fallen into an indigo-vat.

अस्त्यरण्ये कश्चिच्छृगालः स्वेच्छया नगरोपांते भ्राम्यन्नीलीभांडे पतितः । पश्चात्तत उत्थातुमसमर्थः प्रातरात्मानं मृतवत्संदर्श्य स्थितः। अथ नीलीभांडस्वामिना मृत इति ज्ञात्वा तस्मात्समुत्थाप्य दूरे नीत्वापसारितस्तस्मात्पलायितः । ततोऽसौ वनं मत्वा स्वकीयमात्मानं नीलवर्णमवलोक्याचिंतयत् । अहमिदानीमुत्तमवर्णः । तदाहं स्वकीयोत्कर्षं किं न साधयामि । इत्यालोच्य शृगालानाहूय तेनोक्तम् । अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्तः। तदद्यारभ्यारण्येस्मदाज्ञया व्यवहारः कार्यः । शृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टांगपातं प्रणम्योचुः । यथाज्ञापयति देवः । इत्यनेनैव क्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव । ततस्तेन स्वजातिभिरावृतेनाधिक्यं साधितम् । ततस्तेन व्याघ्रसिंहादीनुत्तमपरिजनान्प्राप्य सदसि शृगालानवलोक्य लज्जमानेनावज्ञया स्वज्ञातयः सर्वे दूरीकृताः। ततो विषण्णान् शृगालानवलोक्य केनचिद् वृद्धशृगालेनैतत्प्रतिज्ञातम्। मा विषीदत । यदनेनानभिज्ञेन नीतिविदो मर्मज्ञा वयं स्वसमीपात्परिभूतास्तद्यथायं नश्यति तथा विधेयम् । यतोऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानमिमं मन्यंते । तद्यथायं परिचितो भवति तथा कुरुत । तत्र चैवमनुष्ठेयम् । यतः सर्वे संध्यासमये संनिधाने महारावमेकदैव करिष्यथ ततस्तं शब्दमाकर्ण्य जातिस्वभावात्तेनापि शब्दः कर्तव्यः । ततस्तथानुष्ठिते सति तद् भूतम् । यतः

यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ १ ॥

ततः शब्दादभिज्ञाय स व्याघ्रेण हतः । अतोऽहं ब्रवीमि ।

आत्मपक्षं परित्यज्य परपक्षेषु यो रतः ।
स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥ २ ॥

Hitopadesa III.

---

## II.

### Monkeys advised by a bird.

अस्ति कस्मिंश्चित्पर्वतैकदेशे वानरयूथम् । तच्च कदाचिद्धेमंतसमयेऽसौम्यवातसंस्पर्शवेपमानकलेवरं प्रवर्षद्घनधारानिपातसमाहतं न कथंचिच्छांतिमगमत् ।अथ केचिद्वानरा वह्निकणसदृशानि गुंजाफलानि विचित्य वह्निवांछया फूत्कुर्वंतः समंतात्तस्थुः । अथ सूचीमुखो नाम पक्षी तेषां वृथायासमवलोक्य प्रोवाच । भो भवंतः सर्वे मूर्खतमाः । नैते वह्निकणा वह्निकणसदृशानि गुंजाफलान्येतानि । तत्किं वृथा श्रमेण । नैतस्माच्छीतरक्षा भवति । तदन्विष्यतां कश्चिन्निर्गतो वनप्रदेशो गुहा वा गिरिकंदरं वा । अद्यापि साटोपो मेघो दृश्यते । अथ तेषामेकतमो वृद्धवानरस्तमुवाच । भोः किं तवानेन व्यापारेण । तद्गम्यताम् । सोऽपि तमनादृत्य भूयोपि वानराननवरतमाह । भोः किं वृथा क्लेशेन । अथ यावदसौ न कथंचित्प्रलपन्विरमति तावदेकेन वानरेण व्यर्थश्रमत्वात्कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालित उपरतश्च । अतोऽहं ब्रवीमि ।

नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया ।
सूचीमुख विजानीहि नाशिष्यायोपदिश्यते ॥

Panchatantra I.

---

## III.

### General precepts of advice.

दंडं दंडीव भूतेषु धारयन्धरणीपतिः ।
प्रजाः समनुगृह्णीयात्प्रजापतिरिव स्वयम् ॥ १ ॥
वाक् सूनृता दया दानं दीनोपगतरक्षणम् ।
इति संगः सतां साधु ह्येतत्सत्पुरुषव्रतम् ॥ २ ॥
आविष्ट इव दुःखेन हृद्गतेन गरीयसा ।
समन्वितः करुणया परया दीनमुद्धरेत् ॥ ३ ॥
न तेभ्योऽभ्यधिकाः संतः संति सत्पुरुषव्रतैः ।
दुःखपंकार्णवे मग्नं दीनमभ्युद्धरंति ये ॥ ४ ॥
दयामास्थाय परमां धर्मादविचलन्नृपः ।
पीडितानामनाथानां कुर्यादश्रुप्रमार्जनम् ॥ ५ ॥
आनृशंस्यं परो धर्मः सर्वप्राणभृतां यतः ।
तस्माद्राजानृशंस्येन पालयेत्कृपणं जनम् ॥ ६ ॥
न हि स्वसुखमन्विच्छन्पीडयेत्कृपणं नृपः ।
कृपणः पीड्यमानो हि मन्युना हंति पार्थिवम् ॥ ७ ॥
को हि नाम कुले जातः सुखलेशेन लोभितः ।
अल्पसाराणि भूतानि पीडयेदविचारयन् ॥ ८ ॥
आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ ९ ॥
महावाताहतभ्रांतिमेघमालातिपेलवैः ।
कथं नाम महात्मानो ह्रियंते विषयारिभिः ॥ १० ॥
जलांतश्चंद्रचपलं जीवनं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत्कल्याणमाचरेत् ॥ ११ ॥
जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभंगुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ १२ ॥

हिमांशुमाली न तथा न चोत्फुल्लोत्पलं सरः ।
आनंदयाति चेतांसि यथा सज्जनचेष्टितम् ॥ १३ ॥
सतः शीलोपसंपन्नानकस्मादेव दुर्जनः ।
अंतः प्रविश्य दहति शुष्कवृक्षानिवानलः ॥ १४ ॥
निःश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः ।
परमाशीविषैः संगं कुर्यान्न त्वेव दुर्जनैः ॥ १५ ॥
असाध्यं साधुमंत्राणां तत्रिं वाग्विषमुत्सृजन् ।
द्विजिह्ववदनं धत्ते दुष्टो दुर्जनपन्नगः ॥ १६ ॥
हृदि विद्ध इवात्यर्थं यथा संतप्यते जनः ।
पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥ १७ ॥
प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु च ।
शिखीव केकामधुरः प्रियवाक् कस्य न प्रियः ॥ १८ ॥
अलंक्रियंते शिखिनः केकया मदरक्तया ।
वाचा विपश्चितोऽत्यर्थं माधुर्यगुणयुक्तया ॥ १९ ॥
गुणानुरागी स्थितिमान् श्रद्दधानो दयान्वितः ।
धनं धर्माय विसृजेत् प्रियां वाचमुदीरयेत् ॥ २० ॥
ये प्रियाणि प्रभाषंते प्रयच्छंति च सत्कृतिम् ।
श्रीमंतोऽनिंद्यचरिता देवास्ते नरविग्रहाः ॥ २१ ॥
शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा ।
देवतावद् गुरुजनमात्मवच्च सुहृज्जनम् ॥ २२ ॥
प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः ।
कुर्वीताभिमुखान्भूत्यै देवान् सुकृतकर्मणा ॥ २३ ॥
स्वभावेन हरेन्मित्रं सद्भावेन च बांधवान् ।
स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनम् ॥ २४ ॥
अनिंदा परकृत्येषु स्वधर्मपरिपालनम् ।
कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः ॥ २५ ॥

प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे ।
गृहागते परिष्वंगः शक्त्या दानं सहिष्णुता ॥ २६ ॥
बंधुभिर्बंधुसंयोगः स्वजने चरितानि च ।
तच्चित्तानुविधायित्वामिति वृत्तं महात्मनाम् ॥ २७ ॥
सनातने वर्त्मनि साधु तिष्ठतामयं हि पंथा गृहमेधिनां मतः ।
अनेन गच्छन्नियतं महात्मनामिमं च लोकं परमं च विंदति ॥ २८ ॥

Kamandaki–Nitisara.

---

IV.

Charudatta on poverty.

**चारुदत्तः** । ( ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य )

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव संप्रति विरूढतृणांकुरासु
बीजांजलिः पतति कीटमुखावलीढः ॥ १ ॥

( इति मंदं मंदं परिक्रम्योपविष्टः ) ।

**विदूषकः** । एष आर्य चारुदत्तः । तद् यावत्सांप्रतमुपसर्पामि । ( उपसृत्य ) स्वस्ति भवते । वर्द्धतां भवान् ।

**चारु०** । अये सर्वकालमित्रं मैत्रेयः प्राप्तः । सखे स्वागतम् । आस्यताम् ।

**विदू०** । यद् भवानाज्ञापयति । भो वयस्य एष ते प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्य आर्यचारुदत्तस्य त्वया उपनेतव्य इति । ( समर्पयति )

**चारु०** । ( गृहीत्वा सचिंतः स्थितः ) ।

**विदू०** । भो इदं किं चिन्त्यते ।

**चारु०** । वयस्य

सुखं हि दुःखान्यनुभूय शोभते घनांधकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥२॥

**विदू०** । भो वयस्य मरणाद्दारिद्र्याद्वा कतरत्ते रोचते ।

**चारु०** । वयस्य

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनंतकं दुःखम् ॥ ३ ॥

**विदू०**। भो वयस्य अलं संतापितेन । प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चंद्रस्येव परिक्षयोऽपि ते अधिकतरं रमणीयः ।

**चारु०** । वयस्य न ममार्थान्प्रति दैन्यम् । पश्य

एतत्तु मां दहति यद् गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयंति ।
संशुष्कसांद्रमदलेखमिव भ्रमंतः
कालात्यये मधुकराः करिणः कपोलम् ॥ ४ ॥

**विदू०** । भो वयस्य एते खलु दास्याः पुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यंते तत्र तत्र गच्छंति ।

**चारु०** । वयस्य

सत्यं न मे विभवनाशकृतास्ति चिंता
भाग्यक्रमेण हि धनानि भवंति यांति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवंति ॥ ५ ॥

अपि च

दारिद्र्याद् ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ६ ॥

विदू० । भो वयस्य तमेव अर्थकल्यवर्तं स्मृत्वा अलं संतापितेन ।

चारु० । वयस्य दारिद्र्यं हि पुरुषस्य

निवासश्चिंताया: परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गंतुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ ७ ॥

तद्वयस्य कृतो मया गृहदेवताभ्यो बलि: । गच्छ त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर ।

विदू० । न गमिष्यामि ।

चारु० । किमर्थम् ।

विदू० । यत एवं पूज्यमाना अपि देवता न ते प्रसीदंति । तत्को गुणो देवेष्वर्चितेषु ।

चारु० । वयस्य मा मैवम् । गृहस्थस्य नित्योऽयं विधि: ।

तपसा मनसा वाग्भि: पूजिता बालिकर्मभि: ।
तुष्यंति शमिनां नित्यं देवता: किं विचारितै: ॥ ८ ॥

तद्गच्छ मातृभ्यो बालिमुपहर ।

विदू० । भो न गमिष्यामि । अन्य: कोऽपि प्रयुज्यताम् । मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति आदर्शगता इव छाया वामतो दक्षिणा दक्षिणतो वामा । अन्यच्च एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटाश्च राजवल्लभा: संचरंति । तस्मात् मंडूकलुब्धस्येव कालसर्पस्य मूषिक इव अभिमुखापतितो वध्य इदानीं भविष्यामि । त्वमिह उपविष्ट: किं करिष्यसि ।

चारु० । भवतु तिष्ठ तावदहं समाधिं निर्वर्तयामि ।

Mrichchhakatika I.

---

## V.

### The Summer.

प्रचंडसूर्यः स्पृहणीयचंद्रमाः सदावगाहक्षमवारिसंचयः ।
दिनांतरम्योभ्युपशांतमन्मथो निदाघकालः समुपागतः प्रिये ॥ १ ॥
निशाः शशांकक्षतनीलराजयः क्वचिद्विचित्रं जलयंत्रमंदिरम् ।
मणिप्रकाराः सरसं च चंदनं शुचौ प्रिये यांति जनस्य सेव्यताम् ॥२॥
असह्यवातोद्धतरेणुमंडला प्रचंडसूर्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः प्रियावियोगानलदग्धमानसैः ॥ ३ ॥
मृगाः प्रचंडातपतापिता भृशं तृषा महत्या परिशुष्कतालवः ।
वनांतरे तोयमिति प्रधाविता निरीक्ष्य भिन्नांजनसन्निभं नभः ॥ ४ ॥
रवेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांशुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन्मुहुः फणी मयूरस्य तले निषीदति ॥५॥
तृषा महत्या हतविक्रमोद्यमः श्वसन्मुहुर्भूरिविदारिताननः ।
न हंत्यदूरेऽपि गजान्मृगाधिपो विलोलजिह्वश्चलिताग्रकेसरः ॥ ६ ॥
विशुष्ककंठोद्गतशीकरांभसो गभस्तिभिर्भानुमतोऽभितापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो न दंतिनः केसरिणोऽपि बिभ्यति ॥७॥
हुताग्निकल्पैः सवितुर्मरीचिभिः कलापिनः क्लांतशरीरचेतसः ।
न भोगिनं घ्नंति समीपवर्तिनं कलापचक्रेषु निवेशिताननम् ॥ ८ ॥
विवस्वता तीव्रतरांशुमालिना सपंकतोयात्सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः फणातपत्रस्य तले निषीदति ॥९॥
रविप्रभाभिन्नशिरोमणिप्रभो विलोलजिह्वाद्वयलीढमारुतः ।
विषाग्निसूर्यातपतापितः फणी न हंति मंडूककुलं तृषाकुलः ॥ १० ॥

पटुतरवदनदाहात् प्लुष्टशस्यप्ररोहाः
परुषपवनवेगात् क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापात् क्षीणतोया समंताद्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनांताः ॥ ११ ॥

श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
   कपिकुलमुपयाति क्लांतमद्रेर्निकुंजम् ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छन्
   शरभकुलमजिह्मं प्रोद्धरत्यंबु कूपात् ॥ १२ ॥
विकचनवकुसुंभस्वच्छसिंदूरभासा
   परुषपवनवेगोद्धूतवेगेन तूर्णम् ।
तरुविटपलताग्रालिंगनव्याकुलेन
   दिशि दिशि परिदग्धा भूमयः पावकेन ॥ १३ ॥
ध्वनति पवनविद्धः पर्वतानां दरीषु
   स्फुरति पटुनिनादः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
   क्षपयति मृगयूथं प्रांतलग्नो दवाग्निः ॥ १४ ॥
बहुतर इव जातः शाल्मलीनां वनेषु
   स्फुरति कनकगौरः कोटरेषु द्रुमाणाम् ।
परिणतदलशाखादुत्पतत्याशु वृक्षाद्
   भ्रमति पवनधूतः सर्वतोऽग्निर्वनांते ॥ १५ ॥
गजगवयमृगेंद्रा वह्निसंतप्तदेहाः
   सुहृद इव समेता द्वंद्वभावं विहाय ।
हुतवहपरिखेदादाशु निर्गत्य कक्षाद्
   विपुलपुलिनदेशान्निम्नगामाश्रयंते ॥ १६ ॥

Ritusamhara I.

---

## VI.

### An old woman's tale.

एषोऽस्मि पर्यटन्नेकदा गतो विदेहेषु । मिथिलामप्रविश्यैव बहिः क्वचिन्माठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः क्षणम-

लिंदभूमाववास्थिषि । तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्तत । किमेतदंब कथय कारणमिति पृष्टा सकरुणमाचष्ट । जैवातृक ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे बलशंबलयोरिव वसुमतीप्रियंवदे सख्यमप्रतिममधत्ताम् । अथ प्रथमगर्भाभिनंदितां तां च प्रियसखीं वसुमतीं दिदृक्षुः प्रियंवदा सह भर्त्रा पुष्पपुरमगमत् । तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्षां गतिमगमन्मगधराजः । मैथिलेंद्रस्तु मालवेंद्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दंडावयवमादित्सुरटवीपथमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि । तत्र च मे शार्दूलनखावलीढनिपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयंत्रमुक्तः क्षणादलिक्षत् । भिल्लदारकैः स बालोऽपाहारि । सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रांतव्रणा स्वस्थीभूय स्वभर्तुरंतिकमुपातिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत् । सा भृशं रुरोद । रुदितांते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनमात्मनश्च केनापि वनचरेण व्रणविरोपणं स्वस्थायाश्च पुनस्तेनोपयंतुं चिंतिताया निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानतारुण्यं तदक्षमेण चामुना विविक्ते विपिने स्वशिरःकर्तनोद्यममनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननमात्मनश्चोपयमनमित्यकथयत् । स तु पृष्टो मैथिलेंद्रस्यैव कोऽपि सेवकः कारणविलंबी तन्मार्गानुसारी जातः । सह तेन भर्तुरंतिकमुपसृत्य पुत्रवृत्तांतेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चादहाव । स च राजा दिष्टदोषाज्ज्ये-

ष्ठपुत्रैश्चिरं विगृह्य पुनरसहिष्णुतयातिमात्रं चिरं प्रयुध्य बद्धः । देवी च बंधनं गमिता । दग्धा पुनरहमस्मिन्नपि वार्द्धके हतजीवितमपारयंती हातुं प्रव्रज्यां किल ग्रहीषम् । दुहिता तु मम हतजीविताकृष्टा विकटवर्ममहादेवीं कल्पसुंदरीं किलाशिश्रियत् । तौ चेद्राजपुत्रौ निरुपद्रवावेव वार्धिष्येतामियता कालेन तवेमां वयोवस्थामस्प्रक्ष्येताम् । तयोश्च सतोर्न दायादा नरेंद्रस्य प्रसह्यकारिणो भवेयुरिति प्रमन्युरभिरुरोद ।

Dasakumaracharita.

---

VI.

Krishna on the immortality of the soul.

**संजय उवाच ।**

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदंतमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

**श्रीभगवानुवाच ।**

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

**अर्जुन उवाच ।**

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ५

**संजय उवाच ।**

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्य इति गोविंदमुक्त्वा तूष्णीं बभूव ह ॥ ६ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदंतमिदं वचः ॥ ७ ॥
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचंति पंडिताः ॥ ८ ॥
देहिनोस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहांतरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ ९ ॥
य एनं वेत्ति हंतारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हंति न हन्यते ॥ १० ॥
न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ ११ ॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हंति कम् ॥ १२ ॥
वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ १३ ॥
नैनं छिंदंति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ १४ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ १५ ॥
अव्यक्तोऽयमचिंत्योयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ १६ ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ १७ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ १८ ॥
स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते ॥ १९ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशम् ॥ २० ॥
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ २१ ॥
अकीर्तिं चापि भूतानि कथयिष्यंति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ २२ ॥
भयाद्रणादुपरतं मंस्यंते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ २३ ॥
अवाच्यवादांश्च बहून्वदिष्यंति तवाहिताः ।
निंदंतस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ २४ ॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौंतेय युद्धाय कृतनिश्चयः ॥ २५ ॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ २६ ॥

Bhagavadgita II.

---

## VIII.

### The tale of Mahasveta.

### Part I.

एतत् प्रायेण भवतः श्रुतिविषयमापतितमेव यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः संतीति । तासां चतुर्दश कुलानि । गंधर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव कुलद्वयं जातम् । तत्र मुनेस्तनयश्चित्रसेनादीनां पंचदशानां भ्रातॄणामधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः । इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानंतरे किंपुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः । अरिष्टायास्तु पुत्रस्तुंबुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गंधर्वस्तास्मिन्द्वितीये

गंधर्वकुले गंधर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान् । अपरिमितगंधर्वबलपरिवारस्य तस्यापि स एव गिरिरधिवासः । यत्तु तत्सोममयूखसंभवमप्सरसां कुलं तस्मात् त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकरकिरणावदातवर्णा कन्यका प्रसूता । तां च द्वितीयगंधर्वकुलाधिपतिर्हंसो मंदाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत् । सा तु भगवता मकरकेतनेनेव रतिः शरत्समयेनेव कमलिनी हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती निखिलांतःपुरस्वामिनी च तस्याभवत् ।

तयोश्च तादृशयोर्महात्मनोरहमीदृशी निगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मम जन्माभिनंदितवान् । अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान् । साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गंधर्वाणामंकादंकं संचरंत्यविदितशोकायासमनोहरं शैशवमतीतवती । क्रमेण च कृतं मे वपुषि वसंत इव मधुमासेन मधुमास इव नवपल्लवेन नवपल्लव इव कुसुमेन कुसुम इव मधुकरेण मधुकर इव मदनेन नवयौवनेन पदम् ।

अथ सकलजीवलोकहृदयानंदकेषु मधुमासदिवसेष्वेकदाहमंबया सह मधुमासविस्तारितशोभमिदमच्छोदं सरः स्नातुमभ्यागमम् । अत्र च त्र्यंबकप्रतिबिंबकानि वंदमाना स्निग्धमनोहरतरोद्देशदर्शनलोभाक्षिप्तहृदया सह सखीजनेन व्यचरम् । अथैकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतमनाघ्रातपूर्वममानुषलोकोचितं कुसुमगंधमभ्यजिघ्रम् । कुतोयमित्युपारूढकुतूहला चाहं मुकुलितलोचना तेन कुसुमगंधेन मधुकरीवाकृष्यमाणा कतिचित्पदानि गत्वा विलासमिव सरस्वत्याः स्वयंवरपातिमिव सर्वविद्यानां संकेतस्थानमिव सर्वश्रुतीनामात्मानुरूपेण सवयसाऽपरेण देवतार्चनकुसुमान्युच्चिन्वता तापसकुमारेणानुगतमतिमनोहरं स्नानार्थमागतं मुनिकुमारकमपश्यम् ।

तेन च कर्णावतंसीकृतां वसंतदर्शनानंदितायाः स्मितप्रभामिव वनश्रियः कृत्तिकातारास्तबकानुकारिणीममृतबिंदुनिस्यंदिनीमदृष्टपूर्वां कुसुममंजरीमद्राक्षम् । अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमल इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाऽहमचिंतयम् । अहो रूपातिशयनिष्पादनोपकरणकौशलस्याक्षीणता विधातुर्यस्त्रिभुवनाद्भुतरूपसंभारं भगवंतं कुसुमायुधमुत्पाद्य तदाकारातिरिक्तरूपराशिरयमपरो मुनिमायामयो मकरकेतुरुत्पादितः । मन्ये च सकलजगन्नयनानंदकरं शशिबिंबं विरचयता प्रजापतिना प्रथममेतदाकारकरणकौशलाभ्यास एव कृतोऽन्यथा किमिव हि सदृशवस्तुविरचनायाः कारणम् । इति विचिंतयंतीमेव मामविचारितगुणदोषविशेषो रूपैकपक्षपाती नवयौवनसुलभः कुसुमायुधः कुसुमासवमद इव मधुकरीं परवशामकरोत् ।

आसीच्च मम मनसि । शांतात्मनि दूरीकृतमदनव्यतिकरेऽस्मिञ्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन । एवं च नामातिमूढं हृदयमंगनाजनस्य यदनुरागविषययोग्यतामपि विचारयितुं नालम् । क्वेदमतिभास्वरं धाम तेजसां तपसां च । क्व च प्राकृतजनाभिनंदितानि मन्मथपरिष्पंदितानि । सर्वथा यावदेव सचेतनास्मि यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघवमेतत्तावदेवास्मात्प्रदेशादपसरणं श्रेयः । अशेषजनपूजनीया चेयं जातिरिति कृत्वा तस्मै प्रणाममकरवम् ।

अथ कृतप्रणामायां मयि दुर्लंघ्यशासनतया भगवतो मनोभुवो मदजननतया च मधुमासस्यातिरमणीयतया च तस्य प्रदेशस्याविनयबहुलतया चाभिनवयौवनस्य चंचलप्रकृतितया चेंद्रियाणां दुर्निवारतया च विषयाभिलाषाणां चपलतया च मनोवृत्तेस्तथा भवितव्यतया च तस्य तस्य वस्तुनः किं बहुना मम भाग्यदौरात्म्यादस्य चेदृशस्य क्लेशस्य विहितत्वात्तमपि मद्विकारदर्शनापहृतधैर्यं प्रदीपमिव पवनस्तरलतामन-

यदनंगः । तया तु तस्यातिप्रकटया विकृत्या द्विगुणीकृतमदनावेशा तत्क्षणमहमवर्णनयोग्यां कामप्यवस्थामन्वभवम् ।

प्राप्तप्रसरा चोपसृत्य तं द्वितियमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम् । भगवन्किमभिधानः कस्य वायं तपोधनस्य युवा किन्नाम्नश्च तरोरियमनेनावतंसीकृता कुसुममंजरी । जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोऽयमनाघ्रातपूर्वो गंध इति । सोऽब्रवित् । अयं श्वेतकेतोर्नामात्युदारतपसो मुनेरात्मजः पुंडरीको नाम । इयं च पारिजातनाम्नः पादपस्य मंजरी नंदनवनदेवतयाऽस्योपहारीकृतानेन कर्णपूरीकृता ।

इत्युक्तवति तस्मिन्स तपोधनयुवा किंचिदुपदर्शितस्मितो मामवादीत् । अयि कुतूहलिनी किमनेन प्रश्नायासेन । यदि रुचितसुरभिपरिमला गृह्यतामियमित्युक्त्वा समुपसृत्यात्मीयाच्छ्रवणादपनीय मदीये श्रवणपुटे तामकरोत् । स मत्कपोलतलस्पर्शसुखेन तरलीकृतांगुलिजालकात्करतलादक्षमालां लज्जया सह गलितामपि नाज्ञासीत् । अथाहं तामसंप्राप्तामेवं भूतलमक्षमालां गृहीत्वा सलीलं कंठाभरणतामनयम् ।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचद्भर्तृदारिके स्नाता देवी प्रत्यासीदति गृहगमनकालस्तत्क्रियतां मज्जनविधिरिति । अहं तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमांकुशपातेनानिच्छयापि कथं कथमपि समाकृष्यमाणा तन्मुखाल्लावण्यामृतपंकमग्नामिव अतिकृच्छ्रेण दृष्टिमाकृष्य स्नातुमुदचलम् । उच्चलितायां च मयि द्वितीयो मुनिदारकस्तथाविधं तस्य धैर्यस्खलितमालोक्य किंचित्प्रकटितप्रणयकोप इवावादीत् ।

सखे पुंडरीक नैतदनुरूपं भवतः । क्षुद्रजनक्षुण्ण एष मार्गः । धैर्यधना हि साधवः । किं यःकश्चित्प्राकृत इव विक्लवीभवंतमात्मानं न रुणत्सि । कुतस्तवापूर्वोऽयमद्येंद्रियोपप्लवो येनास्येवं कृतः । क ते तद्धै-

र्यम् । क्वासाविंद्रियजयः । क्व तद्वशित्वं चेतसः । क्व सा प्रशांतिः । क्व तत्कुलक्रमागतं ब्रह्मचर्यम् । क्व सा सर्वविषयनिरुत्सुकता । क्व ते गुरूपदेशाः । क्व तानि श्रुतानि । क्व ता वैराग्यबुद्धयः । क्व तदुपभोगविद्वेषित्वम् । क्व सा सुखपराङ्मुखता । क्वासौ तपस्यभिनिवेशः । क्व सा संयमिता । क्व सा भोगानामुपर्यरुचिः । क्व तद्यौवनानुशासनम् । सर्वथा निष्फला प्रज्ञा निर्गुणो धर्मशास्त्राभ्यासो निरर्थकाः संस्कारो निरुपकारको गुरूपदेशविवेको निष्प्रयोजना प्रबुद्धता निष्कारणं ज्ञानं यदत्र भवादृशा अपि रागाभिषंगैः कलुषीक्रियंते प्रमादैश्चाभिभूयंते । कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि । अहो विगतचेतनस्त्वम् । अपहृता नामेयम् । इदमपि तावदपह्रियमाणमनयाऽनार्यया निवार्यतां हृदयमिति ।

एवमभिधीयमानश्च तेन किंचिदुपजातलज्ज इव स प्रत्यवादीत् । सखे कपिंजल किं मामन्यथा संभावयसि । नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम् । इत्यभिधायालीककोपकांतेन प्रयत्नविरचितभीषणभ्रुकुटिभूषणेन मुखेंदुना मामवदत् । चपले प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात्पदमपि न गंतव्यमिति । तच्च श्रुत्वाहमात्मकंठादुन्मुच्यैकावलीं भगवन् गृह्यतामक्षमालेति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारितपाणौ निधाय स्वेदसलिलस्नातापि पुनः स्नातुमवातरम् । उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादंबया सह तमेव चिंतयंती स्वभवनमयासिषम् । गत्वा च प्रविश्य कन्यांतःपुरं ततः प्रभृति तद्विरहविधुरा किमागतास्मि किं तत्रैव स्थितास्मि किं परिवृतास्मि किमेकाकिन्यस्मि किं तूष्णीमस्मि किं प्रस्तुतालापास्मि किं जागर्मि किं सुप्तास्मि किं रोदिमि किं न रोदिमि किं दुःखमिदं किमुत्कंठेयं किं व्याधिरयं किं व्यसनमिदं किमुत्सवोऽयं किं दिवस एष किं निशेयं कानि रम्याणि कान्यरम्याणीति सर्वं नावागच्छम् । केवलमारुह्य कुमारीपुरप्रासादं

विसर्ज्य च सर्खीजनं द्वारि निवारिताशेषपरिजनप्रवेशा सर्वव्यापारानु-त्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी निष्पंदमतिष्ठम् ।

Kadambari.

---

IX.

The Yaksha's wife.

तन्वी श्यामा शिखरिदशना पक्वबिंबाधरोष्ठी
 मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
 या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ १ ॥
तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
 दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कंठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
 जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥ २ ॥
नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया
 निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लंबालकत्वा-
 दिंदोर्दैन्यं त्वदनुसरणक्लिष्टकांतेर्बिभर्ति ॥ ३ ॥
आलोके ते निपतति पुरा सा बलिव्याकुला वा
 मत्सादृश्यं विरहतनु वा भावगम्यं लिखंती ।
पृच्छंती वा मधुरवचनां सारिकां पंजरस्थां
 कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥ ४ ॥
उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणां
 मद्गोत्रांकं विरचितपदं गेयमुद्गातुकामा ।
तंत्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचिद्
 भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरंती ॥ ५ ॥

शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यंती भुवि गणनया देहलीदत्तपुष्पैः ।
मत्संगं वा हृदयनिहितारंभमास्वादयंती
प्रायेणैते रमणविरहेष्वंगनानां विनोदाः ॥ ६ ॥
सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शंके रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्संदेशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥ ७ ॥

Meghaduta.

---

## X.

Characteristics of strong-minded and spirited persons.

क्षुत्क्षामोपि जराकृशोपि शिथिलप्रायोपि कष्टां दशा-
मापन्नोपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
मत्तेभेंद्रविभिन्नकुंभकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ १ ॥
स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशांतये ।
सिंहो जंबुकमंकमागतमपि त्यक्त्वा निहंति द्विपं
सर्वः कृच्छ्रगतोऽपि वांछति जनः सत्त्वानुरूपं फलम् ॥ २ ॥
लांगूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिंडदस्य कुरुते गजपुंगवस्तु
धीरं विलोकयति चाटुशतैश्च भुंक्ते ॥ ३ ॥
कुसुमस्तबकस्येव द्वे गती स्तो मनस्विनाम् ।
मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ ४ ॥

संत्यन्येपि बृहस्पतिप्रभृतयः संभाविताः पंचषा-
स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।
द्वावेव ग्रसते दिनेश्वरनिशाणेश्वरौ भासुरौ
भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ ५ ॥
वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स विधर्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह महतां निःसीमानश्चरित्रविभूतयः ॥ ६ ॥
वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ ७ ॥
यदचेतनोपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकांतः ।
तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ ८ ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ९ ॥

Bhartrihari II.

---

## XI.

## A feigned quarrel between Chanakya and Chandragupta.

### Part I.

**राजा** ( स्वगतम् ) । राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम् । कुतः ।

परार्थानुष्ठाने रहयति नृपं स्वार्थपरता
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।

परार्थश्चेत्स्वार्थादभिमततरो हंत परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ॥ १ ॥

अन्यच्च । कृतककलहं कृत्वा स्वतंत्रेण किंचित्कालांतरं व्यवहर्तव्यमित्यार्यादेशः । स च कथमपि मया पातकमिवाभ्युपगतः । (प्रकाशम् ) आर्य वैहीनरे सुगांगमार्गमादेशय ।

कंचुकी । इत इतो देवः । ( नाट्येन परिक्रम्य ) । अयं सुगांगप्रासादः । शनैरारोहतु देवः ।

राजा । ( नाट्येनारुह्य दिशोऽवलोक्य ) अहो शरत्समयसंभृतशोभानां दिशामतिरमणीयता । ( समंतान्नाट्येनावलोक्य ) । अये कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम् । आर्य वैहीनरे अथास्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः ।

कं० । अथ किम् ।

राजा । तत्किं न गृहीतमस्मद्वचनं पौरैः ।

कं० । ( कर्णौ पिधाय ) शांतं पापं शांतं पापम् । पृथिव्यामस्खलितपूर्वं देवस्य शासनं कथं पौरेषु स्खलिष्यति ।

राजा । तत्कथमप्रवृत्तकौमुदीमहोत्सवमद्यापि कुसुमपुरम् ।

कं० । एवमेवैतत् ।

राजा । किमेतत् ।

कं० । देव इदम् ।

राजा । स्फुटं कथय ।

कं० । प्रतिषिद्धः कौमुदीमहोत्सवः ।

राजा । ( सक्रोधम् ) आः केन ।

कं० । देव नातः परं विज्ञापयितुं शक्यम् ।

राजा । न खलु आर्यचाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीयश्चक्षुषो विषयः ।

**कं०** । देव कोऽन्यो जीवितुकामो देवस्य शासनमतिवर्तेत ।

**राजा** । शोणोत्तरे उपवेष्टुमिच्छामि ।

**प्रतीहारी** । देव इदं सिंहासनम् ।

**राजा** ( नाट्येनोपविश्य ) । आर्य वैहीनरे आर्यचाणाक्यं द्रष्टुमिच्छामि ।

**कं०** । यदाज्ञापयति देवः । ( इति चाणक्यमुपगम्य जानुभ्यां भूमौ निपत्य ) । जयत्वार्यः ।

**चाण०** । वैहीनरे किमागमनप्रयोजनम् ।

**कं०** । सुगृहीतनामधेयो देवश्चंद्रगुप्त आर्यं शिरसा प्रणम्य विज्ञापयति । अकृतक्रियांतरायमार्यं द्रष्टुमिच्छामीति ।

**चाण०** । वृषलो मां द्रष्टुमिच्छति । वैहीनरे न खलु वृषलश्रवणपथं गतोऽयं मत्कृतः कौमुदीमहोत्सवप्रतिषेधः ।

**कं०** । आर्य अथ किम् ।

**चाण०** । ( सक्रोधम् ) आः केन कथितम् ।

**कं०** । ( सभयम् ) प्रसीदत्वार्यः । स्वयमेव सुगांगप्रासादगतेन देवेनावलोकितमप्रवृत्तकौमुदमिहोत्सवं पुरम् ।

**चाण०**। आः ज्ञातम् । ततो भवाद्भिरंतरा प्रोत्साह्य कोपितो वृषलः । किमन्यत् ।

**कं०** । ( भयं नाटयंस्तूष्णीमधोमुखास्तिष्ठति ) ।

**चाण०** । अहो राजपरिजनस्य चाणक्योपरि प्रद्वेषपक्षपातः । अथ क वृषलः ।

**कं०** । ( भयं नाटयन् ) आर्य सुगांगगतेन देवेनाहमार्यपादमूलं प्रेषितः ।

**चाण०**। ( उत्थाय ) सुगांगमार्गमादेशय ।

**कं०** । इत इत आर्यः । ( उभौ परिक्रामतः ) ।

**कं०** । एष सुगांगप्रसादः । शनैरारोहत्वार्यः ।

**चाण०** ( नाट्येनारुह्यावलोक्य च )। अये सिंहासनमध्यास्ते वृषलः । साधु साधु ।

नंदैर्वियुक्तमनपेक्षितराजराजै-
रध्यासितं च वृषलेन वृषेण राज्ञाम् ।
सिंहासनं सदृशपार्थिवसंगतं च
प्रीतिं परां प्रगुणयंति गुणा ममैते ॥ २ ॥

( उपसृत्य ) विजयतां वृषलः ।

**राजा** । ( आसनादुत्थाय ) । आर्य चंद्रगुप्तः प्रणमति । ( इति पादयोः पतति ) ।

**चाण०** ( पाणौ गृहीत्वा ) । उत्तिष्ठोत्तिष्ठ वत्स ।

**राजा** (उत्थाय) । तदुपविशत्वार्यः । ( उभौ यथोचितमुपविष्टौ ) ।

**चाण०** । वृषल किमर्थं वयमाहूताः ।

**राजा** । आर्यस्य दर्शनेनात्मानमनुग्राहयितुम् ।

**चाण०** । ( सस्मितम् ) । अलमनेन प्रश्रयेण । न निष्प्रयोजनमधिकारवंतः प्रभुभिराहूयंते ।

**राजा** । आर्य कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्यः पश्यति ।

**चाण०** । ( स्मितं कृत्वा ) । उपालब्धुं तर्हि वयमाहूताः ।

**राजा** । शांतं पापं शांतं पापम् । नहि नहि । विज्ञापयितुम् ।

**चाण०** । यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण स्वैररुचयो न निरोद्धव्याः ।

**राजा** । एवमेतत् कः संदेहः । किंतु न कदाचिदार्यस्य निष्प्रयोजना प्रवृत्तिरित्यस्ति नः प्रश्नावकाशः ।

**चाण०** । वृषल सम्यग्गृहीतवानसि । न प्रयोजनमंतरा चाणक्यः स्वप्नेपि चेष्टत इति ।

**राजा** । आर्य अत एव शुश्रूषा मां मुखरयति ।

**चाण०** । वृषल श्रूयताम् । इह खल्वर्थशास्त्रकारास्त्रिविधां सिद्धिमुपवर्णयंति राजायत्तां सचिवायत्तामुभयायत्तां चेति । ततः सचिवायत्तसिद्धेस्तव किं प्रयोजनान्वेषणेन । यतो वयमेवात्र नियुक्ता वेत्स्यामः ।

**राजा** ( सकोपं मुखं परावर्तयति ) ।

( नेपथ्ये क्रोधोत्तेजनसमर्थौ श्लोकौ वैतालिकौ पठतः )

Mudrarakshasa III.

---

## XII.

### A feigned quarrel between Chanakya and Chandragupta.

### Part II.

**राजा** । आर्य वैहीनरे आभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रं दापय।

**कं०** । यदाज्ञापयति देवः । ( इति उत्थाय परिक्रामति ) ।

**चाण०** । (सक्रोधम्) । वैहीनरे तिष्ठ । न गंतव्यम् । वृषल किमयमस्थाने महानर्थोत्सर्गः ।

**राजा** ( सकोपम् ) । आर्येणैवं सर्वत्र निरुद्धचेष्टाप्रसरस्य मे बंधनमिव राज्यं न राज्यमिव ।

**चाण०** । वृषल अस्यमनभियुक्तानां राज्ञामेते दोषाः संभवंति । तद्यदि न सहसे ततः स्वयमभियुज्यस्व ।

**राजा** । एते स्वकर्मण्यभियुज्यामहे ।

**चाण०** । प्रियं नः । वयमपि स्वकर्मण्यभियुज्यामहे ।

**राजा** । यद्येवं तर्हि कौमुदीमहोत्सवप्रतिषेधस्य तावत्प्रयोजनं श्रोतुमिच्छामि ।

**चाण०** । वृषल कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

**राजा** । प्रथमं तावन्ममाज्ञाव्याघातः ।

**चाण०** । वृषल ममापि तवाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनम् । अथ त्वमपरमपि प्रयोजनं श्रोतुमिच्छसि तदपि कथयामि ।

**राजा** । कथ्यताम् ।

**चाण०** । शोणोत्तरे मद्वचनात्कायस्थमचलं ब्रूहि यत्तद्भद्रभटप्रभृतीनामितोपरागादपक्रम्य मलयकेतुमाश्रितानां लेख्यपत्रं दीयतामिति ।

**प्रती०** । यदार्य आज्ञापयति । ( निष्क्रम्य पुनः प्रविश्य ) । आर्य इदं पत्रकम् ।

**चाण०** ( गृहीत्वा ) । वृषल दृश्यतामिदम् ।

**राजा** ( आत्मगतं वाचयति ) । ( प्रकाशम् ) आर्य एवतादेतत्पत्रकम् । अथैतेषामपरागहेतून्विज्ञातुमिच्छामि ।

( चाणक्यस्तान्कथयति ) ।

**राजा** । एवमेतेषु परिज्ञातापरागहेतुषु क्षिप्रमेव कस्मान्न प्रतिविहितमार्येण ।

**चाण०** । वृषल न पारितं प्रतिविधातुम् ।

**राजा** । किमकौशलादुत प्रयोजनापेक्षया ।

**चाण०** । कथमकौशलं भविष्यति । प्रयोजनापेक्षयैव ।

**राजा** । प्रयोजनमिदानीं श्रोतुमिच्छामि । [ चाणक्यस्तदपि कथयति ] ।

**चाण०** । तदेवमनुगृहीतास्मत्पक्षो राक्षसोपदेशप्रवणो महीयसा म्लेच्छबलेन परिवृतः पितृवधामर्षी पर्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यतः सोऽयं व्यायामकालो नोत्सवकाल इति दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः ।

**राजा** । आर्य बहु प्रष्टव्यमत्र ।

**चाण०** । वृषल विश्रब्धं पृच्छ । ममापि बहु आख्येयमत्र ।

**राजा** । सोऽप्यस्य सर्वस्यानर्थस्य हेतुर्मलयकेतुः कस्मादपक्रामन्नुपेक्षितः ।

**चाण०** । वृषल अनुपेक्षणे द्वयी गतिः । निगृह्येत वा प्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत वा । निग्रहे तावत्पर्वतकोऽस्माभिरेव व्यापादित इति कृतघ्नतायाः स्वहस्तो दत्तः स्यात् । प्रतिश्रुतराज्यार्द्धप्रतिपादनेपि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यादिति मलयकेतुरपक्रामन्नुपेक्षितः ।

**राजा** । अत्र तावदेवम् । राक्षसः पुनरिहैव वर्तमान आर्येणोपेक्षित इत्यत्र किमुत्तरमार्यस्य ।

**चाण०** । राक्षसोपि स्वामिनि स्थिरानुरागित्वात्सुचिरमेकत्र वासाच्चशीलज्ञानां नंदानुरक्तानां प्रकृतीनामत्यंतविश्वास्यः प्रज्ञापुरुषकाराभ्यामुपेत इहैवांतर्नगरे वर्तमान खलु महांतमंतःकोपमुत्पादयेत् । दूरीकृतस्तु बाह्यकोपमुत्पादयन्नपि कथमप्युपायैर्वशयितुं शक्य इत्ययमत्रस्थ एव हृदयेशयः शंकुरिवोद्धृत्य दूरीकृतः ।

**राजा** । आर्य कस्माद्विक्रम्य न गृहीतः ।

**चाण०** । राक्षसः खल्वसौ । विक्रम्य गृह्यमाणो युष्मद्बलानि बहूनि नाशयेत्स्वयं वा विनश्येत् । एवं सत्युभयथापि दोषः ।

**राजा** । न शक्नुमो वयमार्यस्य मतिमतिशयितुम् । सर्वथा अमात्यराक्षस एवात्र प्रशस्यतरः ।

**चाण०** ( सक्रोधम् ) न भवानिति वाक्यशेषः । भो वृषल तेन किं कृतम् ।

**राजा** । श्रूयताम् । तेन खलु महात्मना

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
  व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैः स्वनीतिविभवैः संमोहमापादिता
  विश्वास्येष्वपि विश्वसंति मतयो न स्वेषु वर्गेषु नः ॥ १ ॥

**चाण०** । ( विहस्य ) । एतत्कृतं राक्षसेन । वृषल मया पुनर्ज्ञातं नंदमिव भवंतमुध्दृत्य भवानिव भूतले मलयकेतू राजाधिराजपदे नियोजित इति ।

**राजा** । अन्येनैवेदमनुष्ठितं किमत्रार्यस्य ।

**चाण०** । हे मत्सरिन् सकलरिपुकुलोत्सादर्दीर्घां प्रतिज्ञामारुह्य केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते नंदाः पश्यतो राक्षसस्य पर्यायभूताः पशव इव हताः ।

**राजा** । अन्येनैवेदमनुष्ठितम् ।

**चाण०** । आः केन ।

**राजा** । नंदकुलविद्वेषिणा दैवेन ।

**चाण०** । दैवमविद्वांसः प्रमाणयंति ।

**राजा** । विद्वांसोप्यविकत्थना भवंति ।

**चाण०** । ( सकोपम् ) । वृषल भृत्यमिव मामारोढुमिच्छासि ।

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः
( भूमौ पादं प्रहृत्य )
प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।
प्रणाशान्नंदानां प्रशममुपयातं त्वमधुना
परीतः कालेन ज्वलयासि मम क्रोधदहनम् ॥ २ ॥

**राजा** ( सावेगमात्मगतम् ) अये कथं सत्यमेवार्यः कुपितः ।

**चाण०** । ( कृतककोपं संहृत्य ) । वृषल वृषल अलमुत्तरोत्तरेण । यद्यस्मत्तो गरीयान्राक्षसोवगम्येत तदिदं शस्त्रं तस्मै दीयताम् । इति शस्त्रमुत्सृज्योत्थाय चाकाशे लक्ष्यं बद्ध्वा स्वगतम् ) । राक्षस राक्षस एष भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।

चाणक्यतश्चलितभक्तिमहं सुखेन
जेष्यामि मौर्यमिति संप्रति यः प्रयुक्तः ।

भेदः किलैष भवता सकलः स एव
संपत्स्यते शठ तवैव हि दूषणाय ॥ ३ ॥
( इति निष्क्रांतः ) ।

**राजा** । आर्य वैहीनरे अतःप्रभृत्यनादृत्य चाणक्यं चंद्रगुप्तः स्वयमेव राज्यं करिष्यतीति गृहीतार्थाः क्रियंतां प्रकृतयः ।

**कं०** । ( आत्मगतम् ) कथं निरुपपदमेव चाणक्यमिति नार्यचाणक्यमिति । हंत संगृहीतोधिकारः । अथवा न खल्वत्र वस्तुनि देवदोषः । कुतः

स दोषः सचिवस्यैव यदसत्कुरुते नृपः ।
याति यंतुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ४ ॥

**राजा** । आर्य किं विचारयसि ।

**कं०** । देव न किंचित् । दिष्ट्या देव इदानीं देवः संवृत्तः ।

**राजा** । ( आत्मगतम् ) एवमस्मासु गृह्यमाणेषु स्वकार्यसिद्धिकामः सकामो भवत्वार्यः । ( प्रकाशम् ) शोणोत्तरे अनेन शुष्ककलहेन शिरोवेदना मां बाधते । शयनगृहमादेशय ।

**प्रती०** । एतु एतु देवः ।

**राजा** ( आत्मगतम् ) ।

आर्याज्ञयैव मम लंघितगौरवस्य
बुद्धिः प्रवेष्टुमिव भूविवरं प्रवृत्ता ।
ये सत्यमेव हि गुरूनतिपातयंति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥ ५ ॥

Mudrarakshasa III.

---

## XIII.
### The tale of Mahasveta.
### Part II.

अथ तांबूलकरंकवाहिनी मदीया तरलिका नाम मयैव सह गता स्नातुमासीत् । सा पश्चाच्चिरादिवागत्य तथावस्थितां शनैर्मामवादीत् ।

भर्तृदारिके यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ तयोरेको येन भर्तृदुहितुरियमवतंसीकृता सुरतरुकुसुममंजरी स तस्माद् द्वितीयादात्मनो रक्षन्दर्शनमतिनिभृतपदः कुसुमितलतासंतानगहनांतरेणोपसृत्य मामागच्छंतीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत्। बालिके केयं कन्यका कस्य वापत्यं किमभिधाना क्व वा गच्छतीति। मयोक्तमेषा खलु भगवतः श्वेतभानोरंशुसंभूतायामप्सरसि गौर्यां समुत्पन्ना देवस्य गंधर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गंधर्वाधिवासं हेमकूटमचलवरमभिप्रस्थिता। इति कथिते च मया किमपि चिंतयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चक्षुषा चिरमभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन्पुनराह। बालिके कल्याणिनी तवाविसंवादिन्यचपला बालभावेप्याकृतिरियं तत्करोषि मे वचनमेकमभ्यर्थ्यमानेति। ततो मया सविनयमुपरचितांजलिपुटया स दर्शितादरमभिहितः। भगवन्कस्मादेवमभिधत्से। काहं महात्मनः। सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयंति किं पुनराज्ञाम्। तद्विस्रब्धमादिश्यतां कर्तव्यमनुगृह्यतामयं जन इति। एवमुक्तश्च मया सस्नेहया सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनंद्य निकटवर्तिनस्तमालपादपात्पल्लवमादाय निष्पीड्य तटशिलातले तेन गंधगजमदसुरभिपरिमलेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां स्वहस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्येयं पत्रिका त्वया तस्यै कन्यकायै प्रच्छन्नमेकाकिन्यै देयेत्यभिधायार्पितवान्। इत्युक्त्वा च सा तांबूलभाजनादाकृष्य तामदर्शयत्। अहं तु तस्याः करतलादादाय वल्कलपट्टिकां तस्यामिमामभिलिखितामार्यामपश्यम्।

दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः॥

ततः सानंदाहं तरलिके कथय कथं स त्वया दृष्टः किं किमभिहि-

तासि तेन कियंतं कालमवस्थितासि तत्र कियदनुसरन्नस्मानसावागत इति पुनः पुनः पर्यपृच्छम् । अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम् ।

अथास्तं गते भगवति रवौ सा छत्रग्राहिणी समागत्याकथयत् । भर्तृदारिके तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति कथयति चाक्षमालामुपयाचितुमागतोऽस्मीति । अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशंका समाहूयान्यतमं कंचुकिनं गच्छ प्रवेश्यतामित्यादिश्य प्राहिणवम् । अथ मुहूर्तादिव तं तस्यानुरूपं सखायमृषिकुमारं कपिंजलनामानं जराधवलस्य कंचुकिनोनुमार्गेणागच्छंतमपश्यम् । अंतिकमुपगतस्य चास्य पर्याकुलमिव सविषादमिवाकारमलक्षयम् । उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम् । उपविष्टस्य च बलादनिच्छतोऽपि प्रक्षाल्य चरणावपमृज्य चोत्तरीयांशुकपल्लवेनाव्यवधानायां भूमावेव तस्यांतिके समुपाविशम् । अथ मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव स तस्यां मत्समीपोपविष्टायां तरलिकायां चक्षुरपातयत् । अहं तु विदिताभिप्राया दृष्ट्वैव भगवन्नव्यतिरिक्तेयमस्मच्छरीरादशंकितमभिधीयतामित्यवोचम् ।

एवमुक्तस्तु मया कपिंजलः प्रत्यवादीत् । राजपुत्रि किं ब्रवीमि । वागेव मे नाभिधेयविषयमवतरति त्रपया । क्व कंदमूलफलाशी शांतो वनवासनिरतो मुनिजनः क्व चायमशांतजनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविविधविलाससंकटो रागप्रायः प्रपंचः । सर्वमेवानुपपन्नमालोकय किमारब्धं दैवेन । अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम् । न जाने किमिदं वल्कलानां सदृशमुताहो जटानां समुचितं किं तपसोनुरूपमाहोस्विद्धर्मकर्मोपदेशांगमिदम् । अपूर्वेयं विडंबना । केवलमवश्यकथनीयमिदमपर उपायो न दृश्यतेऽन्या प्रतिक्रिया नोपलभ्यतेऽन्यच्छरणं नालोक्यतेऽन्या गतिर्नास्ति । अकथ्यमाने च महाननर्थोपनिपातो जायते । प्राणपरित्यागेनापि रक्षणीयाः सुहृदसव इति

कथयामि। अस्ति भवत्याः समक्षमेव स मया तथा निष्ठुरमुपदर्शित-कोपेनाभिहितः। तथा चाभिधाय परित्यज्य तं तस्मात्प्रदेशादुपजात-मन्युरुत्सृष्टकुसुमावचयोऽन्यं प्रदेशमगमम्। अपयातायां भवत्यां मुहूर्त-मिव स्थित्वैकाकी किमयमिदानीमाचरतीति संजातवितर्कः प्रतिनिवृत्य विटपांतरितविग्रहस्तं प्रदेशं व्यलोकयम्। यावत्तत्र तं नाद्राक्षमा-सीच्च मे मनस्येवम्। किं नु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन् गतो भवेत्। गतायां च तस्यां लब्धचेतनो लज्जया न शक्नोति मे दर्शनपथ-मुपगंतुम्। आहोस्वित्कुपितः परित्यज्य मां गतः। उतान्वेषमाणो मामेव प्रदेशमन्यमितः समाश्रितः स्यादित्येवं विकल्पयन् कंचित्काल-मतिष्ठम्। तेन तु जन्मतः प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूय-मानः पुनराचिंतयम्। स कदाचिद्धैर्यस्खलनविलक्षः किंचिदनिष्टमपि समाचरेत्। न हि किंचिन्न क्रियते ह्रिया। तन्न युक्तमेनमेकाकिनं कर्तुमित्यवधार्यान्वेष्टुमादरमकरवम्। अन्वेषमाणश्च यथा यथा नापश्यं तं तथा तथा सुहृत्स्नेहकातरेण मनसा तत्तदशोभनमाशंकमानस्तरुल-तागहनानि चंदनवीथिका लतामंडपान्सरःकूलानि च वीक्षमाणो निपुणमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम्। अथैकस्मिँल्लतागहने कृतावस्थानमुत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तंभितमि-वोपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव मदनमयमिव परायत्तचित्त-वृत्तिं परा कोटिमधिरूढं मन्मथावेशस्यानभिज्ञेयपूर्वाकारं तमहमद्राक्षम्।

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन हृदयेनाचिंतयम्। एवं नामायमतिदुर्विषहवेगो मकरकेतुर्येना-नेन क्षणेनायमीदृशमवस्थांतरमप्रतीकारमुपनीतः। कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः। अहो बत महाच्चित्रं तथा नामायमाशैश-वाद्धीरप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमारकाणां स्पृहणीय-चरित आसीत्। अथ स्वितर इव परिभूय ज्ञानमविगणय्य तपःप्र-भावमुन्मूल्य गांभीर्यं मन्मथेन जडीकृतः। सर्वथा दुर्लभं यौवनमस्ख-

लितमित्युपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसदेशावसक्तपाणिस्तमनुन्मीलितलोचनमेव सखे पुंडरीक कथय किमिदमित्यपृच्छम् । अथ प्रयत्नेन चक्षुरुन्मील्य मंथरया दृष्ट्या सुचिरं विलोक्य मामायततरं निःश्वस्य लज्जाविशीर्यमाणविरलाक्षरं सखे कपिंजल विदितवृत्तांतोऽपि किं मां पृच्छसीति कृच्छ्रेण शनैरवदत् । अहं तु तदाकर्ण्य तदवस्थयैवाप्रतीकारविकारोऽयं तथापि सुहृदा सुहृदसन्मार्गे प्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्याब्रवम् ।

सखे पुंडरीक सुविदितमेतन्मम । केवलमिदमेव पृच्छामि यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टमुत धर्मशास्त्रेषु पठितमुत धर्मार्जनोपायोऽयमुतापरस्तपसां प्रकार उत स्वर्गगमनमार्गोऽयमुत व्रतरहस्यमिदमुत मोक्षप्राप्तियुक्तिराहोस्विदन्यो नियमप्रकारः । कथमेतद्युक्तं भवतो मनसापि चिंतयितुं किं पुनराख्यातुमीक्षितुं वा । कथय किमप्रबुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे । मूढो हि मदनेनायास्यते । का वा सुखाशा साधुजननिंदितेष्वेवंविधेषु विषयेषु भवतः । स खलु धर्मबुद्ध्या विषलतावनं सिंचति कुवलयमालेति निस्त्रिंशलतामालिंगति कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहते महारत्नमिति ज्वलंतमंगारमभिस्पृशति मूढो विषयोपभोगेष्वनिष्टानुबंधिषु यः परिणतिविरसेषु सुखबुद्धिमारोपयति । अधिगतविषयतत्त्वोऽपि कस्मात्खद्योत इव ज्योतिर्निर्वीर्यमिदं ज्ञानमुद्वहसि यतो न निवारयसि प्रबलरजःप्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानींद्रियाणि न नियमयसि वा क्षुभितं मनः । कोऽयमनंगो नाम । धैर्यमवलंब्य निर्भर्त्स्यतामयं दुराचारः। इत्येवं वदत एव मे वचनमाक्षिप्य प्रतिपक्ष्मांतरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः करतलेन पाणौ मामवलंब्यावोचत् । सखे किं बहुनोक्तेन । सर्वथा सुस्थोऽस्याशीविषविषवेगविषमाणामेतेषां कुसुमचापसायकानां पतितोऽसि न गोचरे । सुखमुपदिश्यते परस्य । यस्य चेंद्रियाणि संति मनो वा विद्यते यः पश्यति वा शृणोति वा श्रुतमवधारयति वा यो वा शुभ-

मिदमशुभमिदमिति विवेक्तुमलं स खलूपदेशमर्हति । मम तु सर्वमेवेदमातिदूरापेतम् । अवष्टंभो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा। कथमप्येवमेवायत्नविधृतास्तिष्ठंत्यसवः । दूरातीतः खलूपदेशकालः । समतिक्रांतो धैर्यावसरः । गता प्रतिसंख्यानवेला । अतीतो ज्ञानावष्टंभसमयः । केन वान्येनास्मिन्समये भवंतमपहायोपदेष्टव्यमुन्मार्गप्रवृत्तिनिवारणं वा कारणीयं कस्यान्यस्य वा वचसि मया स्थातव्यं को वापरस्त्वत्समो मे जगति बंधुः । किं करोमि यन्न शक्नोमि निवारयितुमात्मानम् । इयमनेनैव क्षणेन भवता दृष्टावस्था । तद्गत इदानीमुपदेशकालः । यावत्प्राणिमि तावदस्य कल्पांतोदितद्वादशदिनकरकिरणातपतीव्रस्य मदनसंतापस्य प्रतिक्रियां क्रियमाणामिच्छामि । पच्यंत इव मेंगान्युत्क्वथ्यत इव हृदयं प्लुष्यत इव दृष्टिर्ज्वलतीव शरीरम् । अत्र यत्प्राप्तकालं तत्करोतु भवानित्यभिधाय तूष्णीमभवत् ।

एवमुक्तोऽप्यहमेनं प्राबोधयं पुनः। यदा सानुनयं सोपग्रहं चाभिधीयमानोऽपि नाकरोत्कर्णे तदाहमचिंतयम् । अतिभूमिमयं गतो न शक्यते निवर्तयितुमितीदानीं निरर्थकाः खलूपदेशाः । तत्प्राणपरिरक्षणेऽपि तावदस्य यत्नमाचरामीति कृतमतिरुत्थाय गत्वा तस्मात्सरसः सरसा मृणालिकाः समुद्धृत्य कमलिनीपलाशानि जललवलांछितानि चादाय कुमुदकुवलयकमलानि गृहीत्वागत्य तस्मिन्नेव लतागृहशिलातले शयनमस्याकल्पयम् । तत्र च सुखनिषण्णस्य प्रत्यासन्नवर्तिनां चंदनविटपिनां मृदूनि किसलयानि निष्पीड्य तेन स्वभावसुरभिणा तुषारशिशिरेण रसेन ललाटिकामकल्पयमाचरणतलादंगचर्चां चारचयम् । कदलीदलेन च व्यजनक्रियामन्वतिष्ठम् । आसीच्च मे मनसि चिंता । नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः। क्वायं हरिण इव वनवासनिरतः स्वभावमुग्धो जनः । क्व च विविधविलासरसराशिगंधर्वराजपुत्री महाश्वेता । सर्वथा न हि किंचिदस्य दुर्घटं दुष्करमनायत्तमकर्तव्यं वा जगति । न चायं केनापि प्रतिकूलयितुं शक्यते । का वा

गणना सचेतनेष्वपगतचेतनान्यपि संघट्टयितुमलं यदस्मै रोचते । किं वा तस्य दुःसाध्यमपरमेवंविधो येनायमगाधगांभीर्यसागरस्तृणलवलघुतामुपनीतः । क तत्तपः केयमवस्था । सर्वथा निष्प्रतीकारेयमापदुपस्थिता । किमिदानीं कर्तव्यं किमाचेष्टितव्यं कां दिशं गंतव्यं किं शरणं कश्चोपायः कः सहायः कः प्रकारः का युक्तिः कः समाश्रयो येनास्यासवः संधार्यंते । इत्येते चान्ये च मे विषण्णहृदयस्य संकल्पाः प्रादुरासन् । पुनश्चाचिंतयम् । किमनया निष्प्रयोजनया चिंतया । प्राणास्तावदस्य येन केनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः । तेषां च त्वत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः । अकालांतरक्षमश्चायमस्य मदनविकारः । सततमतिगर्हितेन कृत्येनापि परिरक्षणीयान् मन्यंते सुहृदसून्साधवः । तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम् । किं चान्यत्क्रियते कान्या वा गतिः । सर्वथा प्रयामि तस्याः सकाशमावेदयाम्येतामवस्थामिति चिंतयित्वा च कदाचिदनुचितव्यापारप्रवृत्तं मां विज्ञाय संजातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तत्प्रदेशात्सव्याजमुत्थायागतोऽहम् । तदेवमवस्थिते यदत्रावसरप्राप्तमीदृशस्य चानुरागस्य सदृशमस्मदागमनस्य चानुरूपमात्मनो वा समुचितं तत्र प्रभवति भवतीत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत् ।

अहं तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना सर्वानंदानामुपरि वर्तमाना सर्वमनोरथानामग्रमिवाधिरूढा अमलैरानंदबाष्पजलबिंदुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसरा तत्क्षणमचिंतयम् । दिष्ट्या तावदयमनंगो मामिव तमप्यनुबध्नाति यत्सत्यमनेन मे संतापयतापि कियताप्यंशेन दर्शितानुकूलता । यदि च सत्यमेव तस्येदृशी दशा ततः किमिव नोपकृतमनेन किं वा नोपपादितं को वानेनापरः समानो बंधुः । कथं वा कपिंजलस्य स्वप्नेऽपि वितथा भारती प्रशांताकृतेरस्माद्वदनान्निष्क्रामति । इत्थंभूते किं मयापि प्रतिपत्तव्यं तस्य वा पुरः किमभिधात-

ष्यमित्येवं विचारयंत्या एव प्रविश्य ससंभ्रमा प्रतीहारी अवोचत् । भर्तृदारिके त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्तेति । तच्च श्रुत्वा कपिंजलो महाजनसंमर्दभीरुः सत्वरमुत्थाय राजपुत्रि महानयमुपस्थितः कालातिपातो भगवांश्च भुवनत्रयचूडामणिरस्तमुपगच्छति दिवसकरस्तद्गच्छामि । सर्वथाभिमतसुहृत्प्राणरक्षादक्षिणार्थमयमुपरचितोऽञ्जलिरेष मे परमो विभव इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ । अंबा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत् । तया तु तत्रागत्य किं कृतं किमभिहितं किमाचेष्टितमिति शून्यहृदया सर्वं नालक्षयम् ।

Kadambari.

---

## XIV.

### The tale of Mahasveta.

### Part III.

गतायां च तस्यां रजनिकरमुदितं दृष्ट्वा हृदयेशं संभावयितुं तरलिकया सहोदतिष्ठम् । उच्चलितायां तु मे दुर्निमित्तानिवेदकमस्पंदत दाक्षिणं लोचनम् । उपजातशंका चाचिंतयमिदमपरं किमप्युपक्षिप्तं दैवेनेति। अथ नातिदूरोदितेन चंद्रमंडलेनाप्लाव्यमाने ज्योत्स्नया भुवनांतराले तथैव च तया कंठास्थिताक्षमालया श्रवणशिखरचुंबिन्या च पारिजातमंजर्या पद्मरागरत्नरश्मिनिर्मितेनेव रक्तांशुकेन कृतशिरोवगुंठना केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात्प्रासादशिखरादवातरम् ।

अवतीर्य च प्रमदवनपक्षद्वारेण निर्गत्य तत्समीपमुदचलम् । तत्र च मार्गलताकुसुमरजोधूसरं चरणयुगलं कैलासतटाच्चंद्रोदयस्रुतचंद्रकांतमणिप्रस्रवेण प्रक्षालयंती यस्मिन्प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपाल-

क्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशंका तेन सुतरामवदीर्णहृदयेव किमप्यनिष्टमंतः कथयतेव विषण्णेनांतरात्मना तरलिके किमिदमिति सभयमभिदधाना वेपमानगात्रयष्टिस्तदभिमुखमतित्वरितमगच्छम् ।

अतिनिशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादं विलपंतं कपिंजलमश्रौषम् । हा हतोऽस्मि हा दग्धोऽस्मि हा वंचितोऽस्मि हा किमिदमापतितं किं वृत्तम् । उत्सन्नोऽस्मि । दुरात्मन्मदनपिशाच पाप निर्घृण किमिदमकृत्यमनुष्ठितम् । आः पापे दुश्चरितकारिणि महाश्वेते दुर्विनीते किमनेन तेऽपकृतम् । आः पाप दुश्चरित चंद्रचंडाल कृतार्थोऽसीदानीम् । अपगतदाक्षिण्य दक्षिणानिलहतक पूर्णास्ते मनोरथाः कृतं कर्तव्यं वहेदानीं यथेष्टम् । हा भगवन् श्वेतकेतो पुत्रवत्सल न वेत्सि मुषितमात्मानम् । हा धर्म निष्परिग्रहोऽसि । हा तपो निराश्रयमसि । हा सरस्वति विधवाऽसि । हा सत्य अनाथमसि । हा सुरलोक शून्योऽसि । सखे प्रतिपालय माम् । अहमपि भवंतमनुयास्यामि । न शक्नोमि भवता विना क्षणमप्यवस्थातुमेकाकी । कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपद उत्सृज्य प्रयासि । कुतस्तवेयमतिनिष्ठुरता । कथय त्वदृते क्व गच्छामि । शून्या मे दिशो जाताः । तदुत्तिष्ठ देहि मे विलपतः प्रतिवचनम् । क्व तन्ममोपरि सुहृत्प्रेम । क्व सा स्मितपूर्वाभिभाषिता ।

एवंविधं विलपंतं तं श्रुत्वा दूरादेव मुक्तैकताराक्रंदा सरस्तीरलतासक्तित्रुट्यमानांशुकोत्तरीया यथाशक्ति त्वरितैरज्ञातसमाविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलंती पदे पदे केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा शशिमणिशिलातले विरचितं शयनमधिशयानं कपिंजलेन मद्दर्शनादब्रह्मण्यमित्यूर्ध्वहस्तेन द्विगुणीभूतबाष्पोद्गमेनाक्रोशता कंठे परिष्वक्तं तत्क्षणविगतजीवितं तमहं पापकारिणी मंदभाग्या महाभागमद्राक्षम् ।

उद्भूतमूर्च्छांधकारा च पातालतलमिवावतीर्णा तदा क्वाहमगमं किमकरवं किं व्यलपमिति सर्वमेव नाज्ञासिषम् । असवश्च मे तस्मिन्क्षणे किमतिकठिनतयास्य मूढहृदयस्य किमनेकदुःखसहस्रसहिष्णुतया हतशरीरस्य किं विहिततया दीर्घशोकस्य किं भाजनतया जन्मांतरोपात्तस्य दुष्कृतस्य किं दुःखदाननिपुणतया दग्धदैवस्य किमेकांतवामतया दुरात्मनो मन्मथहतकस्य केन हेतुना नोदच्छांति स्म तदपि न ज्ञातवती । केवलमतिचिराल्लब्धचेतना दुःखभागिनी वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् । अश्रद्दधाना चासंभावनीयं तत्तस्य मरणमात्मनश्च जीवितमुत्थाय हा हा किमिदमुपनतमिति मुक्तार्तनादा हा अंब हा तात हा सख्य इति व्याहरंती विलपितुमारब्धा । हा नाथ जीवितनिबंधनाचक्ष्व क्व मामेकाकिनीमशरणामकरुण विमुच्य यासि । पृच्छ तरलिकां त्वत्कृते मया यानुभूतावस्था । युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः । प्रसीद सकृदप्यालप दर्शय भक्तवत्सलतामीषदपि विलोकय पूरय मे मनोरथम् । आर्तास्मि भक्तास्म्यनुरक्तास्म्यनाथाऽस्मि बालास्म्यगतिकास्मि दुःखितास्म्यनन्यशरणास्मि मदनपरिभूताऽस्मि । किमिति न करोषि दयां कथय किमपराद्धं किं वा नानुष्ठितं मया कस्यां वा नाज्ञायामादृतं कस्मिन्वा त्वदनुकूले नाभिरतं येन कुपितोऽसि । दासीजनमकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात् । अलीकानुरागप्रतारणकुशलया किं वा मया वामया पापया । आः अहमद्यापि प्राणिमि । हा हताऽस्मि मंदभागिनी । धिङ्मां दुष्कृतकारिणीं यस्याः कृते तवेयमीदृशी दशा वर्तते । नास्ति मत्सदृशी नृशंसहृदया याहमेवंविधं भवंतमुत्सृज्य गृहं गतवती । किं मे गृहेण किमंबया किं वा तातेन किं बंधुभिः किं परिजनेन । हा कमुपयामि शरणम् । अयि दैव निर्घृण दर्शय दयां विज्ञापयामि त्वां देहि दयितदक्षिणाम् । भगवति भवितव्यते कुरु कृपां पाहि वनिताम-

नाथाम् । भगवत्यो वनदेवताः प्रसीदत प्रयच्छतास्य प्राणान् । अंब वसुंधरे सकललोकानुग्रहजननि किमर्थं नानुकंपसे । तात कैलासेश शरणं गताऽस्मि ते दर्शय दयालुताम् । इत्येतानि चान्यानि च व्याक्रोशंती कियद्वा स्मरामि ग्रहगृहीतेवाविष्टेवोन्मत्तेव भूतोपहतेव व्यलपम् ।

ततश्च तथाभूते तस्मिन्नवस्थांतरे मरणैकनिश्चया तत्तद्बहु विलप्य तरलिकामब्रवम् । अय्युत्तिष्ठ निष्ठुरहृदये कियद्रोदिमि । काष्ठान्याहृत्य विरचय चितामनुसरामि जीवितेश्वरमिति । अत्रांतरे झटिति चंद्रमंडलविनिर्गतो गगनादवतीर्य महाप्रमाणः पुरुषो महापुरुषलक्षणोपेतो दिव्याकृतिः पीवराभ्यां बाहुभ्यां तमुपरतमुत्क्षिप्य दुंदुभिनादगंभीरेण स्वरेण वत्से महाश्वेते न परित्याज्यास्त्वया प्राणाः पुनरपि तवानेन सह भविष्यति समागम इत्येवमादृतः पितेवाभिधाय सहैवानेन गगनतलमुदपतत् । अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी किमिदमिति कपिंजलमपृच्छम् । असौ तु ससंभ्रममदत्त्वैवोत्तरमुदतिष्ठत् । दुरात्मन्नंतक क मे वयस्यमपहृत्य गच्छसीत्यभिधायोन्मुखः संजातकोपो बध्नन्सावेगमुत्तरीयवल्कलेन परिकरमुत्पतंतं तमेवानुसरन्नंतरिक्षमुदगात् । पश्यंत्या एव च मे सर्व एव ते तारागणमध्यमविशन् ।

मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिंजलगमनेन द्विगुणीकृतशोकायाः सुतरामदीर्यत हृदयम् । किंकर्तव्यतामूढा च तरलिकामब्रवम् । अयि जानासि कथय किमेतदिति । सा तु तदवलोक्य स्त्रीस्वभावकातरतया तस्मिन्क्षणे शोकाभिभाविना भयेनाभिभूता वेपमानांगयष्टिर्मम मरणशंकया च वराकी विषण्णहृदया सकरुणमवादीत् । भर्तृदारिके न जानामि पापकारिणी । किं तु महदिदमाश्चर्यममानुषाकृतिरेष पुरुषः । समाश्वासिता चानेन गच्छता सानुकंपं पित्रेव भर्तृदारिका । प्रायेण चैवंविधा दिव्याः स्वप्नेप्यविसंवादिन्यो भवंत्याकृतयः किमुत साक्षात् । न चाल्पमपि विचारयंती कारणमस्य मिथ्याभिधाने पश्यामि । अतो

युक्तं विचार्यात्मानमस्मात्प्राणपरित्यागव्यवसायान्निवर्तयितुम् । अतिमहत्खल्विदमाश्वासनस्थानमस्यामवस्थायाम् । अपि च तमनुसरन् गत एव कपिंजलस्तस्माच्च कुतोऽयं को वायं किमर्थं चानेनायमपगतासुरुत्क्षिप्य नीतः क्व वा नीतः कस्याच्चासंभावनीयेनामुना पुनःसमागमाशाप्रदानेन भर्तृदारिका समाश्वासितेति सर्वमिदमुपलभ्य जीवितं वा मरणं वा समाचरिष्यसि । अदुर्लभं हि मरणमध्यवसितं पश्चादप्येतद्भविष्यति । न च जीवन्कापिंजलो भर्तृदारिकामदृष्ट्वा स्थास्यति । तेन तत्प्रत्यागमनकालावधयोऽपि तावद् ध्रियंताममी प्राणाः । इत्यभिदधाना पादयोर्मे न्यपतत् । अहं तु सकललोक दुर्लंघ्यतया जीविततृष्णायाः क्षुद्रतया च स्त्रीस्वभावस्य तया च तद्वचनोपनीतया दुराशामृगतृष्णिकया कापिंजलप्रत्यागमनकांक्षया च तस्मिन्काले तदेव युक्तं मन्यमाना नोत्सृष्टवती जीवितम् । आशया हि किमिव न क्रियते । तां च पापकारिणीं कालरात्रिप्रतिमां वर्षसहस्रायमाणां यातनामयीमिव दुःखमयीमिव नरकमयीमिवाग्निमयीमिवोत्सन्ननिद्रा तथैव क्षितितले विचेष्टमाना रेणुकणधूसरैः शिरोरुहैरुपरुद्धमुखी निर्दयाक्रंदजर्जरस्वरक्षयक्षामेण कंठेन तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती ।

प्रत्यूषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा कृतनिश्चया तत्प्रीत्या तमेव कमंडलुमादाय तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा बुद्ध्वा निःसारतां संसारस्य ज्ञात्वा च मंदपुण्यतामात्मनो निरूप्य चाप्रतीकारदारुणतां व्यसनोपनिपातानामाकलय्य दुर्निवारतां शोकस्य दृष्ट्वा च निष्ठुरतां दैवस्य चिंतयित्वा चातिबहुलदुःखतां स्नेहस्य भावयित्वा चानित्यतां सर्वभावानामवधार्य चाकांडभंगुरतां सर्वसुखानामविगणय्य तातमंबां च परित्यज्य सह परिजनेन मनसा सकलबंधुवर्गं निवर्त्य सकलविषयसुखेभ्यो मनः संयम्येंद्रियाणि गृहीतब्रह्मचर्या देवं त्रैलोक्यनाथमनाथशरणमिमं शरणार्थिनी स्थाणुमाश्रितवत्यस्मि । अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तांतस्तातः सहांबया सह बंधुवर्गेणागत्य

सुचिरं कृताक्रंदस्तैस्तैरुपायैरभ्यर्थनाभिश्च बहुभिरुपदेशैश्चानेकप्रकारैः परिसांत्वनैश्च नानाविधैर्गृहगमनाय मे महांतं यत्नमकरोत् । यदा च नेयमस्माद्व्यवसायात्कथंचिदपि शक्यते व्यावर्तयितुमिति निश्चयमधिगतवांस्तदा निराशोऽपि दुस्त्यजतया दुहितृस्नेहस्य पुनः पुनर्मया विसृज्यमानोऽपि बहून्दिवसान्स्थित्वा सशोक एवांतर्दह्यमानहृदयो गृहानयासीत् । गते च ताते ततःप्रभृति देवस्य कृतेऽश्रुमोक्षमात्रकेण कृतज्ञतां दर्शयंती तदनुरागकृशामिदमपुण्यबहुलमस्तमितलज्जममंगलभूतमनेकक्लेशायाससहस्रनिवासं दग्धशरीरकं बहुविधैर्नियमशतैः शोषयंती वन्यैश्च फलमूलवारिभिर्वर्तमाना जपव्याजेन तद्गुणगणानिव गणयंती त्रिसंध्यमत्र सरसि स्नानमुपस्पृशंती प्रतिदिनमर्चयंती देवं त्र्यंबकमस्यामेव गुहायां तरलिकया सह दीर्घं शोकमनुभवंती सुचिन्यवसम् । साहमेवंविधा पापकारिणी निर्लक्षणा निर्लज्जा क्रूरा च गर्हणीया निष्प्रयोजनोत्पन्ना निष्फलजीविता निर्नाथा निरवलंबना निःसुखा च । किं मया दृष्टया पृष्टया वा कृतब्राह्मणवधमहापातकया करोति महाभाग इत्युक्त्वा पांडुना वल्कलोपांतेन शशिनमिव शरन्मेघशकलेनाच्छाद्य वदनं दुर्निवारबाष्पवेगमपारयंती निवारयितुमुन्मुक्तकंठमतिचिरमुच्चैः प्रारोदीत् ।

Kadambari.

---

XV.

A specimen of an elegy.

दैवे पराग्वदनशालिनि हंत जाते
 याते च संप्रति दिवं प्रति बंधुरत्ने ।
कस्मै मनः कथयितासि निजामवस्थां
 कः शीतलैः शमयिता वचनैस्तवाधिम् ॥ १ ॥
प्रत्युद्गता सविनयं सहसा पुरेव
 स्मेरैः स्मरस्य सचिवैः सरसावलोकैः ।

मामद्य मंजुरचनैर्वचनैश्च बाले
हा लेशतोऽपि न कथं शिशिरीकरोषि ॥ २ ॥
सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्याऽपि खेदकलिता विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥ ३ ॥
निर्वाणमंगलपदं त्वरया विशंत्या
मुक्ता दयावति दयाऽपि किल त्वयाऽसौ ।
यन्मां न भामिनि निभालयसि प्रभात-
नीलारविंदमदभंगिपदैः कटाक्षैः ॥ ४ ॥
धृत्वा पदस्खलनभीतिवशात्करं मे
या रूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्या-
मारोहसीति हृदयं शतधा प्रयाति ॥ ५ ॥
निर्दूषणा गुणवती रसभावपूर्णा
सालंकृतिः श्रवणकोमलवर्णराजिः ।
सा मामकीनकवितेव मनोभिरामा
रामा कदापि हृदयान्मम नापयाति ॥ ६ ॥
चिंता शशाम सकलापि सरोरुहाणा-
मिंदोश्च बिंबमसमां सुषमामयासीत् ।
अभ्युद्गतः कलकलः किल कोकिलानां
प्राणप्रिये यदवधि त्वमितो गताऽसि ॥ ७ ॥
सौदामिनीविलसितप्रतिमानकांडे
दत्वा कियंत्यपि दिनानि महेंद्रभोगान् ।
मंत्रोज्झितस्य नृपतेरिव राज्यलक्ष्मी-
र्भाग्यच्युतस्य करतो मम निर्गताऽसि ॥ ८ ॥

केनापि मे विलसितेन समुद्गतस्य
 कोपस्य किं नु करभोरु वशंवदाऽभूः ।
यन्मां विहाय सहसैव पतिव्रतापि
 यातासि मुक्तिरमणीसदनं विदूरम् ॥ ९ ॥
या तावकीनमधुरास्मितकांतिकांते
 भूमंडले विफलतां कविषु व्यतानीत् ।
सा कातराक्षि विलयं त्वयि यातवत्यां
 राकाधुना वहति वैभवमिंदिरायाः ॥ १० ॥
मंदस्मितेन सुधया परिषिच्य या मां
 नेत्रोत्पलैर्विकसितैरनिशं समीजे ।
सा नित्यमंगलमयी गृहदेवता मे
 कामेश्वरी हृदयतो दयिता न याति ॥ ११ ॥
भूमौ स्थिता रमण नाथ मनोहरेति
 संबोधनैर्यमधिरोपितवत्यसि द्याम् ।
स्वर्गं गता कथमिव क्षिपसि त्वमेण-
 शावाक्षि तं धरणिधूलिषु मामिदानीम् ॥ १२ ॥
लावण्यमुज्ज्वलमपास्ततुलं च शीलं
 लोकोत्तरं विनयमर्थमयं नयं च ।
एतान् गुणानशरणानथ मां च हित्वा
 हा हंत सुंदरि कथं त्रिदिवं गतासि ॥ १३ ॥
कांत्या सुवर्णवरया परया च शुद्ध्या
 नित्यं स्वकाः खलु शिखाः परितः क्षिपंतीम् ।
चेतोहरामपि कुशेशयलोचने त्वां
 जानामि कोपकलुषो दहनो ददाह ॥ १४ ॥
कर्पूरवर्तिरिव लोचनतापहंत्री
 फुल्लांबुजस्रगिव कंठसुखैकहेतुः ।

चेतश्चमत्कृतिपदं कवितेव रम्या
नम्या नरीभिरमरीव हि सा विरेजे ॥ १५ ॥

Bhaminivilasa III.

---

## XVI.

### Characteristics of good servants.

एवमादिष्टस्तु मेघनादो व्यजिज्ञपत् । देवी राजलोके तु का कथ भृत्यावर्गोऽपि सकल एवायं कंदमूलफलाशी निश्चयं कृत्वा स्थितो यथास्माकं मध्यादेकेनापि देवपादाद्विना न प्रतीपं गंतव्यम् । भृत्या अपि त एव ये संपत्तेर्विपत्तौ सविशेषं सेवंते समुन्नम्यमानाः सुतरामवनमंत्यालप्यमाना न समानालापा जायंते स्तूयमाना नोत्सिच्यंते क्षिप्यमाणा नापराधं गृह्णंत्युच्यमाना न प्रतीपं भाषंते पृष्टाः प्रियहितं विज्ञापयंत्यनादिष्टाः कुर्वंति कृत्वा न जल्पंति पराक्रम्य न विकत्थंते कथ्यमाना अपि लज्जामुद्वहंति महाहवेष्वग्रतो ध्वजभूता लक्ष्यंते दानकाले पलायमानाः पृष्ठतो निलीयंते नापि स्नेहं बहु मन्यंते जीवितात्पुरो मरणमभिवांछंति गृहादपि स्वामिपादमूले सुखं तिष्ठंति । येषां च तृष्णा चरणपरिचर्यायामसंतोषो हृदयाराधने व्यसनमाननावलोकने वाचालता गुणग्रहणे कार्पण्यमपरित्यागे भर्तुः । ये च विद्यमानेऽप्यात्मनि न स्वाधीनसकलेंद्रियवृत्तयः पश्यंतोऽप्यंधा इव शृण्वंतोऽपि बधिरा इव वाग्मिनोऽपि मूका इव जानंतोऽपि जडा इवानुपहतकरचरणा अपि कुणय इव पंगव इव क्लीबा इवाकिंचित्कराः स्वात्मना स्वामिचित्तादर्शे प्रतिबिंबवद्वर्तंते ।

Kadambari.

---

# XVII.

## Characteristics of wise and foolish persons.

### Part I.

निषेवते प्रशस्तानि निंदितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पंडितलक्षणम् ॥ १ ॥
क्रोधो हर्षश्च दर्पश्च ह्रीस्तंभो मान्यमानिता ।
यमर्थान्नापकर्षंति स वै पंडित उच्यते ॥ २ ॥
यस्य कृत्यं न जानंति मंत्रं वा मंत्रितं परे ।
कृतमेवास्य जानंति स वै पंडित उच्यते ॥ ३ ॥
यस्य कृत्यं न विघ्नंति शीतमुष्णं भयं रतिः।
समृद्धिरसमृद्धिर्वा स वै पंडित उच्यते ॥ ४ ॥
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते।
कामादर्थं वृणीते यः स वै पंडित उच्यते ॥ ५ ॥
यथाशक्ति चिकीर्षंति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यंते नराः पंडितबुद्धयः ॥ ६ ॥
क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुक्ते परार्थे तत्प्रज्ञानं प्रथमं पंडितस्य ॥ ७ ॥
नाप्राप्यमभिवांछंति नष्टं नेच्छंति शोचितुम् ।
आपत्सु च न मुह्यंति नराः पंडितबुद्धयः ॥ ८ ॥
निश्चित्य यः प्रक्रमते नांतर्वसति कर्मणः ।
अवंध्यकालो वश्यात्मा स वै पंडित उच्यते ॥ ९ ॥
आर्यकर्मणि रज्यंते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयंति पंडिता भरतर्षभ ॥ १० ॥
न हृष्यत्यात्मसंमाने तप्यते नावमानने ।
गांगो ह्रद इवाक्षोभ्यो यः स पंडित उच्यते ॥ ११ ॥

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पंडित उच्यते ॥ १२ ॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्थमर्यादः पंडिताख्यां लभेत सः ॥ १३ ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ १४ ॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनास्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ १५ ॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ १६ ॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ १७ ॥
आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ १८ ॥
अर्थं महांतमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पंडित उच्यते ॥ १९ ॥
एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ २० ॥
एकः पापानि कुरुते फलं भुंक्ते महाजनः ।
भोक्तारो विप्रमुच्यते कर्ता दोषेण लिप्यते ॥ २१ ॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ २२ ॥
एकं विषरसो हंति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हंति राजानं मंत्रविप्लवः ॥ २३ ॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ २४ ॥

सोऽस्य दोषो न मंतव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ २५ ॥
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शांतिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ २६ ॥
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ २७ ॥
एको धर्मः परं श्रेयः क्षमैका शांतिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ २८ ॥

Mahâbhârata.

---

## XVIII.

### Characteristics of wise and foolish persons.

### Part II.

द्वे कर्मणी नरः कुर्वन्नास्मिल्लोके विरोचते ।
अब्रुवन्परुषं किंचिदसतोऽनर्चयंस्तथा ॥ १ ॥
द्वाविमौ कंटकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ २ ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ३ ॥
द्वाविमौ पुरुषव्याघ्र सूर्यमंडलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ४ ॥
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ५ ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ ६ ॥
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥ ७ ॥

चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पंडितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मंत्रं न कुर्यान्न दीर्घसूत्रै रभसैश्चारणैश्च ॥ ८ ॥

पंचाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ९ ॥
पंचैव पूजयन्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन् मनुष्यांश्च भिक्षूनतिथिपंचमान् ॥ १० ॥
पंचेंद्रियस्य मर्त्यस्य छिद्रं चेदेकामिंद्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ११ ॥
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तंद्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ १२ ॥
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ १३ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ १४ ॥
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ १५ ॥

अर्थागमो नित्यमरोगिता च प्रियश्च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन्॥१६॥

षडिमे षट्सु जीवंति सप्तमो नोपलभ्यते ।
चोराः प्रमत्ते जीवंति व्याधितेषु चिकित्सकाः ॥ १७ ॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पंडिताः ॥ १८ ॥
षडेते ह्यवमन्यंते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥१९॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकांतारा आतुराश्च चिकित्सकम् ॥ २० ॥

सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यंति कृतमूला अपीश्वराः ॥ २१ ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पंचमम् ।
महच्च दंडपारुष्यमर्थदूषणमेव च ॥ २२ ॥
अष्टौ पूर्वानिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ २३ ॥
ब्राह्मणस्वानि चादत्ते ब्राह्मणैश्च जिघांसति ।
रमते निंदया चैषां प्रशसां नाभिनंदति ॥ २४ ॥
नैतान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्येद् बुध्द्वा विसर्जयेत् ॥ २५ ॥

अष्टौ गुणाः पुरुषं दीपयंति प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ २६ ॥

नवद्वारामिदं वेश्म त्रिस्थूणं पंचसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ॥ २७ ॥
दश धर्मं न जानंति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रांतः क्रुद्धो बुभुक्षितः ॥ २८ ॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्येत पंडितः ॥ २९ ॥

जानाति विश्वासयितुं मनुष्यान् विज्ञातदोषेषु दधाति दंडम् ।
जानाति मात्रां च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ॥३०॥
मृदुर्बलं नावजानाति कंचिद्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ॥ ३१ ॥
प्राप्यापदं न व्यथते कदाचिदुद्योगमान्विच्छाति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा धुरंधरस्तस्य जिताः सपत्नाः ॥ ३२ ॥
अनर्थकं विप्रवासं गृहेभ्यः पापैः संधिं परदाराभिमर्शम् ।
दंभं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव ॥ ३३ ॥

न वैरमुद्दीपयति प्रशांतं न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ॥ ३४ ॥
न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा च पश्चात्कुरुते न तापं स कथ्यते सत्पुरुषार्यशीलः ॥ ३५ ॥
समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथां च ।
गुणैर्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाः सुनीताः ॥ ३६ ॥
चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानंति किंचित् ।
मंत्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽस्य च्यवते कश्चिदर्थः ॥ ३७ ॥
यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्मानकृच्छुद्धभावः ।
अतीव न ज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्नः ॥ ३८ ॥
य आत्मनाऽपत्रपते भृशं नरः स सर्वलोकस्य गुरुर्भवत्युत ।
अनंततेजाः सुमनाः समाहितः स तेजसा सूर्य इवावभासते ॥३९॥

Mahâbhârata.

## XIX.

King Harsha hearing of his father's illness.

अथ कदाचिद् राज्यवर्द्धनं कवचधरमाहूय हूणान्हन्तुं हरिणानिव हरिणेशः किशोरमपरिमितबलानुयातं चिरंतनैरमात्यैः प्रधानैश्च महासामंतैः कृत्वा साभिसारमुत्तरापथं प्राहिणोत् । प्रयांतं च देवो हर्षः कतिचित्प्रयाणकानि तुरंगमैरनुवव्राज । प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि निवर्तमानो नवे वयसि वर्तमानो विक्रमरसानुरोधी केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकंठेषु क्रीडन्मृगयया मृगलोचनः कतिपयान्यहानि बहिरेव व्यलंबत । चकार चाकर्णाकृष्टभासुरभल्लवर्षी स्वल्पीयोभिरेव दिवसैर्निःश्वापदान्यरण्यानि ।

एकदा तु विभावर्यास्तुरीये यामे प्रत्यूषस्येव स्वप्ने चटुलज्वालापुंजपिंजरितसकलककुभं दुर्निवारणदावहुतभुजा दह्यमानं केसरिणमद्रा-

क्षीत् । तस्मिन्नेव दावदहने समुत्सृज्य शावकानुत्प्लुत्यात्मानं पातयंतीं सिंहीमपश्यत् । आसीच्चास्य चेतसि । लोहेभ्यः कठिनतराः खलु स्नेहमया बधनपाशाः। यदाकृष्टास्तिर्यंचोऽप्येवमाचरंतीति । प्रबुद्धस्याऽस्य दक्षिणेतरमाक्षि पस्पंदे । गात्रेष्वकस्मादेव च वेपथुर्विपप्रथे । निर्निमित्तमंतबंधनस्थलाच्चचालेवं हृदयम् । अकारणादेवाजायत गरीयसी दुःखासिका । किमिदमिति समुपनतविविधविकल्पविमथितमतिरपगतधृतिश्चितावनमितवदनः स्तिमिततारकेण चक्षुषा समुद्विग्नमानस्थलकमलिनीवनमिव चकार चकोरेक्षणः क्षणं क्षोणीम् । अह्नि च तस्मिन् शून्येनैव चेतसा चिक्रीड मृगयाम् । आरोहति च हरितहये मध्यमंभो भवनमागत्य उभयतो मंदं मंदं वाह्यमानतनुतालवृंतो वेत्रपट्टिकामधिशयानः साशंक एव तस्थौ । अथ दूरादेव दीर्घाध्वगंतारं कुरंगकनामानमायांतमद्राक्षीत् ।

दृष्ट्वा पूर्वनिमित्तपरंपराविर्भूतभीतिराखिद्यत हृदयेन । कुरंगकस्तु कृतप्रणामः समुपसृत्य प्रथममाननलग्नं विषादमुपनिन्ये पश्चाल्लेखम् । तं च हर्षः स्वयमेवावाचयत् । लेखार्थेनैव च सह गृहीत्वा हृदये संतापमविघ्नरूपोऽभ्यधात् । कुरंगक किं ममाद्य तातस्येति । स चाचचक्षे देव दाहज्वरो महानिति । तच्चाकर्ण्य सहसैवास्य हृदयं पफाल । कृतमनाश्च जनयितुरायुष्कामोऽपरिमितमणिकनकरजतजातमात्मपरिबर्हमशेषं ब्राह्मणसादकरोत् । अभुक्तवानेवोच्चचाल त्वरया च धावमानः परिबर्हकोपनीतमारुह्य तुरंगममेकाक्येव प्रयातुं प्रावर्तत ।

Harshacharita.

---

XX

The Yaksha's message.

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।

विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ १ ॥
भर्तुर्मित्रं प्रियमविधवे विद्धि मामंबुवाहं
तत्संदेशैर्हृदयनिहितैरागतं त्वत्समीपम् ।
यो वृंदानि त्वरयति पथि श्राम्यतां प्रोषितानां
मंदस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ २ ॥
इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कंठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैवम् ।
श्रोष्यत्यस्मात्परमवहिता सौम्य सीमंतिनीनां
कांतोदंतः सुहृदुपनतः संगमात्किंचिदूनः ॥ ३ ॥
तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ ४ ॥
शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्ता-
त्कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रांतः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कंठाविरचितपदं मन्मुखेनेदमाह ॥ ५ ॥
श्यामास्वंगं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हंतैकस्मिन्क्वचिदपि न ते चंडि सादृश्यमस्ति ॥ ६ ॥
त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतांतः ॥ ७ ॥

भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिंग्यंते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदंगमेभिस्तवेति ॥ ८ ॥
नन्वात्मानं बहु विगणयन्नात्मनैवावलंबे
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।
कस्यात्यंतं सुखमुपनतं दुःखमेकांततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ९ ॥
शापांतो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान्गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चंद्रिकासु क्षपासु ॥ १० ॥
एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवंति ॥ ११ ॥
आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुंदप्रसवशिथिलं जीवितं धारयेथाः ॥ १२ ॥
कच्चित्सौम्य व्यवसितमिदं बंधुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ १३ ॥
एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।

इष्टान्देशाञ्ज जलद विचर प्रावृषा संभृतश्री-
मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ १४ ॥
Meghaduta.

---

## XXI.
### A lover's tale.

**मकरंदः** । कथितमवलोकितया मदनोद्यानं गतो माधव इति । भवतु तत्रैव गच्छामि । ( परिक्रम्यावलोक्य च ) दिष्ट्यायं वयस्य इत एवाभिवर्तते । ( निरूप्य ) अस्य तु

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपंति च धीरताम् ॥ १ ॥

( ततः प्रविशति यथानिर्दिष्टो माधवः )

**माधवः** । ( स्वगतम् )

तामिंदुसुंदरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्तते मे ।
लज्जां विजित्य विनयं विनिवार्य धैर्य-
मुन्मथ्य मंथरविवेकमकांड एव ॥ २ ॥

**आश्चर्यम्** । यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानंदमंदममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीय-
मंगारचुंबितमिव व्यथमानमास्ते ॥ ३ ॥

**मकरंदः** । सखे माधव इत इतः ।

**माधवः** । ( परिक्रम्य ) कथं प्रियवयस्यो मम मकरंदः ।

**मकरंदः** । ( उपसृत्य ) सखे माधव ललाटंतपस्तपति तपनस्तदस्मिन्नुद्याने मुहूर्तमुपविशावः ।

**माधवः** । यदभिरुचितं वयस्याय ।

( इत्युभावुपाविशतः )

**मकरंदः** । तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य कांचनारपादपस्याधस्तादुपाविशावः ।

( तथा कुरुतः )

**मकरंदः** । वयस्य माधव अद्य किल मदनोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवंतमवधारयामि । अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरम् ।

( माधवः सलज्जामधोमुखस्तिष्ठति )

**मकरंदः** । ( विहस्य ) तत्किमवनतमुग्धमुखपुंडरीकः स्थितोऽसि । पश्य ।

अन्येषु जंतुषु रजस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरे च ।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथंचिदपह्नुतिर्भूत् ॥ ४ ॥

**माधवः** । वयस्य किं न कथयामि । श्रूयताम् । गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनम् । तत्र चेतस्ततः परिक्रम्यावलोक्य च परिश्रमाद्बकुलमुकुलावलीमनोहराभरणरमणीयस्यांगनभुवो बालबकुलस्यालवालपरिसरे स्थितः । तस्य च यदृच्छया निरंतरनिपतितानि कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि । अनंतरं च संचारिणीव देवस्य मकरकेतोर्जगद्विजयवैजयंतिका निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धनेपथ्यविरचनाविभावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना काऽपि तत एवाभिगतवती ।

सा रामणीयकनिधेरधिदेवता वा
सौंदर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे नियतमिंदुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ ५ ॥

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसंचयावचयलीलादोहदिनीभिरभ्यर्थ्यमाना तमेव बकुलपादपोद्देशमागतवती । तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि । सा पुनर्मम प्रथमदर्शनात्प्रभृत्यमृतवर्तिरिव चक्षुषोर्निरतिशयमानंदमुत्पादयंत्ययस्कांतमणिशलाकेव लोहधातुमंतःकरणमाकृष्टवती । किं बहुना ।

संतापसंततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायः शुभं च विदधात्यशुभं च जंतोः
सर्वंकषा भगवती भवितव्यतैव ॥ ६ ॥

मकरंदः । वयस्य माधव स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् । पश्य ।

व्यतिषजति पदार्थानांतरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयंते ।
विकसति हि पतंगस्योदये पुंडरीकं
द्रवति च हिमरश्मावुद्गते चंद्रकांतः ॥ ७ ॥

ततस्ततः ।

माधवः । ततश्च तत्र

स भ्रूविलासमथ सोऽयमितीरयित्वा
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।
अन्योन्यभावचतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥ ८ ॥

**मकरंदः** । ( स्वगतम् ) कथं प्रत्यभिज्ञापि नाम ।

**माधवः**। अथ ताः सलीलमुत्तालकरकमलतालिकातरलवलयावलीकं परिवृत्य भर्तृदारिके दिष्ट्या वर्धामहे यदत्रैव कोऽपि कस्यापि तिष्ठतीति मामंगुलीदलविलासेनाख्यातवत्यः ।

ततश्च । स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणकुमुलितानां प्रांतविस्तारभाजाम् ।
प्रतिनयननिपाते किंचिदाकुंचितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ ९ ॥

तैश्च । अलसवलितमुग्धस्निग्धनिष्पंदमंदै-
रधिकविकसदतर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपाविद्धं पीतमुन्मूलितं च ॥ १० ॥

एवमहं तु तस्याः सर्वाकारहृदयंगमायाः संभाव्यमानस्नेहरसेनाभिसंधिना विधेयीकृतोऽपि पारिप्लवस्वमात्मनोऽपनिह्नोतुकामः प्राक्प्रस्तुतस्य बकुलदाम्नो यथाकथंचिदवशेषं ग्रथितवानेव। ततो मिलितवेत्रशस्त्रपाणिवर्षवरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्गमिंदुवदनालंकृतवती ।

तदा च । यांत्या मुहुर्वलितकंधरमाननं त-
दावृत्तवृंतशतपत्रनिभं वहंत्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ११ ॥

ततःप्रभृति । परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यंतर्जडयति च तापं च कुरुते ॥१२

अपि च । परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये
भवत्यभ्यस्तेपि स्मरणमतथाभावविरसम् ।
न संतापच्छेदो हिमसरसि वा चंद्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ १३ ॥

**मकरंदः**। ( स्वगतम् ) अहो अभिष्वंगः । तत्किं निषेधयामि सुहृदम् । अथवा

मा मूमुहत्खलु भवंतमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत् ।
इत्यादि नन्विह निरर्थकमेव यस्मा-
त्कामश्च जृंभितगुणो नवयौवनं च ॥ १४ ॥

( प्रकाशम् ) अपि वयस्येन विदिते तदन्वयनामनी ।

**माधवः** । सखे श्रूयताम् । अथ तस्याः करेणुकारोहणसमय एव महतः सखीकदंबकादन्यतमा वारयोषिद्विलंब्य बालबकुलकुसुमावचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीडव्याजेन मामेवमुक्तवती । महाभाग सुश्लिष्टगुणतया रमणीय एष वः सुमनसां संनिवेशः । कुतूहलिनी च नो भर्तृदारिका वर्तते । तस्या अभिनवो विचित्रः कुसुमेषुव्यापारः । तद्भवतु कृतार्थता वैदग्धस्य । फलतु निर्माणरमणीयता विधातुः । समासादयतु सरस एष भर्तृदारिकायाः कंठावलंबनमहार्घतामिति ।

**मकरंदः** । अहो वैदग्ध्यम् ।

**माधवः** । तया च मदनुयुक्तया समाख्यातमियममात्यभूरिवसोः प्रसूतिर्मालती नामाहं च प्रसादभूमिर्भर्तृदारिकाया धात्रेयिका लवंगिका नामेति ।

**मकरंदः** । अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य । अपि च मालती मालतीति मोदते भगवती कामंदकी तां च किल राजा नंदनाय प्रार्थयत इति किंवदंती श्रूयते ।

माधवः । तया चाहमनुरुध्यमानस्तां बकुलमालामात्मनः कंठादवतार्य दत्तवान् । असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागां तामेव बहु मन्यमाना महानयं प्रसाद इति प्रतिगृहीतवती । अनंतरं च यात्राभंगप्रचलितस्य महतः पौरजनस्य संकुलेन विघटितायां तस्यामागतोऽस्मि ।

Malatimâdhava I.

---

## XXII.

### An address to the Ganges.

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्
महैश्वर्यं लीलाजनितजगतः खंडपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासौंदर्यं ते सलिलमशिवं नः शमयतु ॥१ ॥
दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां
द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम् ।
अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥२॥
स्मृतिं याता पुंसामकृतसुकृतानामपि च या
हरत्यंतस्तंद्रां तिमिरमिव चंद्रांशुसरणिः ।
इयं सा ते मूर्तिः सकलसुरसंसेव्यसलिला
ममांतःसंतापं त्रिविधमथ तापं च हरताम् ॥३॥
तवालंबादंब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं यदि भजसि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ॥४॥

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि तीरं श्रितवताम् ।
सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां
जनानामानंदः परिहसति निर्वाणपदवीम् ॥ ५ ॥
स्मृतं सद्यः स्वांतं विरचयति शांतं सकृदपि
प्रगीतं यत्पापं झटिति भवतापं च हरति ।
इदं तद्गंगेति श्रवणरमणीयं खलु पदं
मम प्राणप्रांते वदनकमलांतर्विलसतु ॥ ६ ॥
महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्
न लभ्यं घोराभिः सुविमलतपोराजिभिरपि ।
अचिंत्यं तद्विष्णोः पदमखिलसाधारणतया
ददाना केनासि त्वमिह तुलनीया कथय नः ॥ ७ ॥
नृणामीक्षामात्रादपि परिहरंत्या भवभयं
शिवायास्ते मूर्तेः क इह बहुमानं कथयतु ।
अमर्षम्लानायाः परममनुरोधं गिरिभुवो
विहाय श्रीकंठः शिरसि नियतं धारयति याम् ॥ ८ ॥
स्खलंती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रंथौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥ ९ ॥
जडानंधान्पंगून्प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् ।
निलिंपैर्निर्मुक्तानपि च निरयांतर्निपतितान्
नरानंब त्रातुं त्वमिह परमं भेषजमसि ॥ १० ॥
कृतक्षुद्रैनस्कानथ झटिति संतप्तमनसः
समुद्धर्तुं संति त्रिभुवनतले तीर्थनिवहाः ।

अपि प्रायश्चित्तप्रसरणपथातीतचरिता-
न्नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ ११ ॥
निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥ १२ ॥
समुत्पत्तिः पद्मारमणपदपद्मामलतला-
न्निवासः कंदर्पप्रतिभटजटाजूटभवने ।
अथायं व्यासंगो हतपतितनिस्तारणविधौ
न कस्मादुत्कर्षस्तव जननि जागर्ति जगतः ॥ १३ ॥
नगेभ्यो यांतीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे ।
कया वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः ॥ १४ ॥
विधत्तां निःशंकं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती ॥ १५ ॥
विलीनोऽयं वैवस्वतनगरकोलाहलभरो
गता दूता दूरं क्वचिदपि परेतान्मृगयितुम् ।
विमानानां व्रातो विदलयति वीथिर्दिविषदां
कथा ते कल्याणी यदवधि महीमंडलमगात् ॥ १६ ॥
त्रपंते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वंत्यपि किल कपालिप्रभृतयः ।
इमं तं मामंब त्वमियमनुकंपार्द्रहृदया
पुनाना सर्वेषामघशमनदर्पं दलयसि ॥ १७ ॥

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं हि न्यक्कारो जननि मनुजस्य श्रवणयो-
र्ययोर्नांतर्यातस्तव लहरिलीलाकलकलः ॥ १८ ॥
कियंतः संत्येके नियतमिह लोकार्थघटकाः
परे पूतात्मानः कति च परलोकप्रणयिनः ।
सुखं शेते मातस्तव खलु कृपातः पुनरयं
जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ॥ १९ ॥
भवत्या हि व्रात्याधमपतितपाषंडपरिषत्-
परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा ।
ममाप्येवं प्रेमा दुरितनिवहेष्वंब जगति
स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥ २० ॥
प्रपद्यंते लोकाः कति न भवतीमत्रभवती-
मुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि ।
शपे तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि
स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ॥ २१ ॥
नरान्मूढांस्तत्तज्जनपदसमासक्तमनसो
हसंतः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनानाः सौरभ्यैः सततमलिनो नित्यमलिनान्
सखायो नः संतु त्रिदशतटिनीतीरतरवः ॥ २२ ॥
यजंत्येके देवान्कठिनतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहं तु त्वन्नामस्मरणकृतकामस्त्रिपथगे
जगज्जालं जाने जननि तृणजालेन सदृशम् ॥ २३ ॥
विभूषितानंगरिपूत्तमांगा सद्यः कृतानेकजनार्तिभंगा ।
मनोहरोत्तुंगचलत्तरंगा गंगा ममांगान्यमलीकरोतु ॥२४॥

इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।
यः पठेत्तस्य सर्वत्र जायंते जयसंपदः ॥ २५ ॥

Gangalahari.

---

## XXIII.

### God is not open to the charges of injustice and cruelty.

नेश्वरो जगतः कारणमुपपद्यते । कुतः । वैषम्यनैर्घृण्यप्रसंगात् । कांश्चिदत्यंतसुखभाजः करोति देवादीन् । कांश्चिदत्यंतदुःखभाजः करोति पश्वादीन् । कांश्चिन्मध्यमभोगभाजो मनुष्यादीनिति । एवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत । तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहरणाच्च प्रसज्येत । तस्माद्वैषम्यनैर्घृण्यप्रसंगान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः । वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते । कस्मात् । सापेक्षत्वात् । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च । न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते । किमपेक्षत इति चेद्धर्माधर्मावपेक्षत इति वदामः । अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवंति । एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति । देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवंति । एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दूष्यति ।

---

Sankarabhashya.

## XXIV.

A poet's introduction to his poem.

श्रीधाम्नि दुग्धोदधिपुंडरीके यश्चंचरीकद्युतिमातनोति ।
नीलोत्पलश्यामलदेहकांतिः स वोऽस्तु भूत्यै भगवान्मुकुंदः ॥ १ ॥
साहित्यपाथोनिधिमंथनोत्थं कर्णामृतं रक्षत हे कवींद्राः ।
यदस्य दैत्या इव लुंठनाय काव्यार्थचौराः प्रगुणीभवंति ॥ २ ॥
गृह्णंतु सर्वे यदि वा यथेष्टं नास्ति क्षतिः कापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिंधुः ॥ ३ ॥
सहस्रशः संतु विशारदानां वैदर्भलीलानिधयः प्रबंधाः ।
तथापि वैचित्र्यरहस्यलुब्धाः श्रद्धां विधास्यंति सचेतसोऽत्र ॥ ४ ॥
कुंठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमंगनानां केशेषु कृष्णागरुधूपवासः ॥ ५ ॥
व्युत्पत्तिरावर्जितकोविदापि न रंजनाय क्रमते जडानाम् ।
न मौक्तिकच्छिद्रकरी शलाका प्रगल्भते कर्मणि टंकिकायाः ॥ ६ ॥
कथासु ये लब्धरसाः कवीनां ते नानुरज्यंति कथांतरेषु ।
न ग्रंथिपर्णप्रणयाश्चरंति कस्तूरिकागंधमृगास्तृणेषु ॥ ७ ॥
न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः ।
द्वेष्यैव केषामपि चंद्रखंडविपांडुरा पुंड्रकशर्करापि ॥ ८ ॥
अलौकिकोल्लेखसमर्पणेन विदग्धचेतःकषपट्टिकासु ।
परीक्षितं काव्यसुवर्णमेतल्लोकस्य कंठाभरणत्वमेतु ॥ ९ ॥
किं चारुचारित्रविलासशून्याः कुर्वंति भूपाः कविसंग्रहेण ।
किं जातु गुंजाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ १० ॥
पृथ्वीपतेः संति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि ।
भूपाः कियंतो न बभूवुरुर्व्यां जानाति नामापि न कोऽपि येषाम् ॥ ११ ॥
लंकापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितींद्रैः ॥ १२ ॥

गिरां प्रवृत्तिर्मम नीरसापि मान्या भवित्री नृपतेश्चरित्रैः ।
के वा न शुष्कां मृदमभ्रसिंधुसंबंधिनीं मूर्धनि धारयंति ॥ १३ ॥
कर्णामृतं सूक्तिरसं विमुच्य दोषे प्रयत्नः सुमहान्खलानाम् ।
निरीक्षते केलिवनं प्रविश्य क्रमेलकः कंटकजालमेव ॥ १४ ॥
एषास्तु चालुक्यनरेंद्रवंशसमुद्गतानां गुणमौक्तिकानाम् ।
मद्भारतीसूत्रनिवेशितानामेकावली कंठविभूषणं वः ॥ १५ ॥
Vikramankadevacharita I.

---

## XXV.
### The sunset.

अभितापसंपदमथोष्णरुचिर्निजतेजसामसहमान इव ।
पयसि प्रपित्सुरपरांबुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥
विरलातपच्छविरनुष्णवपुः परितो विपांडु दधदभ्रशिरः ।
अभवद्गतः परिणतिं शिथिलः परिमंदसूर्यनयनो दिवसः ॥ २ ॥
अपराह्णशीतलतरेण शनैरानिलेन लोलितलतांगुलये ।
निलयाय शाखिन इवाह्वयते ददुराकुलाः खगकुलानि गिरः ॥ ३ ॥
उपसंध्यमास्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः ।
करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥ ४ ॥
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलंबनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ५ ॥
गतवत्यराजत जपाकुसुमस्तबकद्युतौ दिनकरेऽवनतिम् ।
बहलानुरागकुरुविंददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥ ६ ॥
द्रुतशातकुंभनिभमंशुमतो वपुरर्धमग्नवपुषः पयसि ।
रुरुचे विरिंचिनखभिन्नबृहज्जगदंडकैकतरखंडमिव ॥ ७ ॥
अनुरागवंतमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकाशयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ ८ ॥

रुचिधाम्नि भर्तरि भृशं विमला परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥९॥
अथ सांद्रसांध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः ।
पृथगुत्पपात विरहार्तिदलद्हृदयसुतासृगनुलिप्तमिव ॥ १० ॥
निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः ॥ ११ ॥
दिवसोऽनुमित्रमगमद्विलयं किमिहास्यते बत मयाऽबलया ।
रुचिभर्तुरस्य विरहाधिगमादिति संध्ययापि सपदि व्यगमि ॥ १२ ॥
पतिते पतंगमृगराजि निजप्रतिबिंबरोषित इवांबुनिधौ ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ १३ ॥
व्यसरन्नु भूधरगुहांतरतः पटलं बहिर्बहलपंकरुचि ।
दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहाः ॥ १४ ॥
किमलंबतांबरविलग्नमधः किमवर्द्धतोर्ध्वमवनीतलतः ।
विससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ १५ ॥
ददृशेऽपि भास्करुचाह्नि न यः स तमीं तमोभिरधिगम्य तताम् ।
द्युतिमग्रहीद् ग्रहगणो लघवः प्रकटीभवंति मलिनाश्रयतः ॥ १६ ॥
वसुधांतनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥ १७ ॥
विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेंदुवपुः ।
मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ १८ ॥
कलया तुषारकिरणस्य पुरः परिमंदभिन्नतिमिरौघजटम् ।
क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ १९ ॥
नवचंद्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् ॥ २० ॥
प्रथमं कलाऽभवदथार्धमथो हिमदीधितिर्महदभूदुदितः ।
दधाति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥२१॥

अथ लक्ष्मणानुगतकांतवपुर्जलधिं विलंघ्य शशिदाशरथिः ।
परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥ २२ ॥
रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
अविलंबितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥ २३ ॥
दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन्मृगधरोऽग्रकरैरुदशिश्वसत्कुमुदिनीवनिताम् ॥ २४ ॥

Shisupalavadha IX.

---

## XXVI.

### Miscellaneous verses.

राज्यं येन पटांतलग्नतृणकं त्यक्तं गुरोराज्ञया
पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः ।
स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां
पायाद्वः स विभीषणाग्रजनिहा रामाभिधानो हरिः ॥१॥
नायं प्रयाति विकृतिं विरसो न यः स्या-
न्न क्षीयते बहुजनैर्नितरां निपीतः ।
जाड्यं निहंति रुचिमेति करोति तृप्तिं
नूनं सुभाषितरसोऽन्यरसातिशायी ॥ २ ॥
लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ ३ ॥
यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पंचबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ४ ॥
गुणदोषौ बुधो गृह्णन्निंदुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कंठे नियच्छति ॥ ५ ॥

पातितोऽरिकराघातैरुत्पतत्येव कंदुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ६ ॥
किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ।
कुंभा न कूपमपि शोषयितुं समर्थाः
कुंभोद्भवेन मुनिनांबुधिरेव पीतः ॥ ७ ॥
असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो
न संगाद्दौर्जन्यं न हि सुजनता कस्यचिदपि ।
प्ररूढे संसर्गे मणिभुजगयोर्जन्मजनिते
मणिर्नाहेर्दोषान् स्पृशति न हि सर्पो मणिगुणान् ॥ ८ ॥
रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालंबो मार्गश्चरणरहितः सारथिरपि ।
रविर्यात्येवांतं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ९ ॥
विपक्षः श्रीकंठो जडतनुरमात्यः शशधरो
वसंतः सामंतः कुसुममिषवः सैन्यमबलाः ।
तथापि त्रैलोक्यं जयति मदनो देहरहितः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १० ॥
ये जाते व्यसने निराकुलधियः संपत्सु नाभ्युन्नताः
प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणप्रयोगैरपि ।
ह्रीमंतः स्वगुणप्रकाशनविधावन्यस्तुतौ पंडिता-
स्ते भूमंडलमंडनैकतिलकाः संतः कियंतो जनाः॥ ११ ॥
क्षुद्राः संति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये ॥ १२ ॥

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष य-
स्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वंगीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १३ ॥
दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः ।
पाणौ पायसदग्धे तक्रं फूत्कृत्य पामरः पिबति ॥ १४ ॥
प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशंकः
सर्वं खलस्य चरितं मशकः करोति ॥ १५ ॥
दुर्वृत्तसंगतिरनर्थपरंपराया
हेतुः सतां भवति किं वचनीयमेतत् ।
लंकेश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बंधमथ दक्षिणसिंधुराजः ॥ १६ ॥
आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां
मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् ।
पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां
मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ १७ ॥
पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन रोषा-
दाबल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी मे ।
गेहं मे छेदयंति प्रतिदिवसमुमाकांतपूजानिमित्तं
तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ १८
आपद्गतं हससि किं द्रविणांध मूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान्प्रपश्यसि घटान् जलयंत्रचक्रे
रिक्ता भवंति भरिता भरिताश्च रिक्ताः ॥ १९ ॥

उड्डीना गुणपत्रिणाः सुखफलान्याराद्विकीर्णान्यधः
पर्यस्ताः परितो यशःस्तबकिताः संपल्लतापल्लवाः ।
प्रागेवापसृतप्रमोदहरिणच्छाया कथांतं गता
दैन्यारण्यमतंगजेन सहसा भग्नेऽभिमानद्रुमे ॥ २० ॥
लज्जे त्वं मज्ज सिंधौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे
शांते प्रांते दिशांते कुरु वसतिमहो गर्व खर्वो भवाशु ।
तेजः पातालमूलं भज भुवि भगवन्मान मा नाम तेऽस्तु
प्रेम्णैकामाश्रयंतीं सततमहमिमां तूर्णमाशां श्रयिष्ये ॥२१॥
सिंहक्षुण्णकरींद्रकुंभगलितं रक्ताक्तमुक्ताफलं
कांतारे बदरीधिया द्रुतमगाद्भिल्लस्य पत्नी मुदा ।
पाणिभ्यामवगुह्य शुल्ककठिनं तद्वीक्ष्य दूरे जहा-
वस्थाने पततामतीव महतामेतादृशी स्याद्गतिः ॥ २२ ॥
क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गंतुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥२३॥
यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥२४॥
गीतं कोकिल ते मुदा रसविदः शृण्वंति कर्णामृतं
नो किंचिद्वितरंति ते तरुदलैरेव स्वयं जीवसि ।
कर्णायुर्हरमुद्गिरंति विरुतं काकास्तु तेभ्यो बलिं
प्रज्ञा एव दिशंति हंत धिगिदं वक्रं विधेः क्रीडितम् ॥२५॥
लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकरः
स्थित्यर्थं परमेश्वराभ्युपगतस्तेनापि मूर्ध्ना धृतः ।

वृद्धिं शीतकरस्तथापि न गतः क्षीणः परं प्रत्युत
प्रायः प्राक्तनमेव कर्म बलवत् कः कस्य कर्तुं क्षमः॥२६॥
कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यप्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयंत्रघटिकान्यायप्रसक्तो विधिः ॥ २७ ॥
येनाकारि मृणालपत्रमशनं क्रीडा करिण्या सह
स्वच्छंदं भ्रमणं च कंदरगणे पीतं पयो नैर्झरम् ।
सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैः-
र्यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥२८॥
शय्या शाद्वलमासनं शुचि शिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कंदाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावंध्यैर्वृथा स्थीयते ॥ २९ ॥
अयं मार्तंडः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतांतः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥३०॥
यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं
भक्त्येशः परितोषितः सुचरितैरानंदिताः सज्जनाः ।
पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचका-
स्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे ॥३१॥
अर्धं दानववैरिणा गिरिजयाप्यर्धं हरस्याहृतं
देवेत्थं भुवनत्रये स्मरहराभावे समुन्मीलति ।
गंगा सागरमंबरं शशिकला शेषश्च पृथ्वीतलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ ३२ ॥

महाराज श्रीमज्जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं सुरपतिरपि स्वं करिवरं
कलानाथं राहुः कमलभवनो हंसमधुना ॥ ३३ ॥

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः ।
क्षांत्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ३४ ॥

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि ।
व्यापत्तिः स्खलितांतरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादंबुपतेरिवावनिपतेः सेवा सदा शंकिनी ॥ ३५ ॥

फलार्थी नपतिर्लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ ३६ ॥

नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अंतरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ ३७ ॥

सिध्यंति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ३८ ॥

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा ।
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतंत्रस्पृहा
स्वातंत्र्यान्नृपतेः स राज्यमथवा प्राणानपि च्यावयेत् ॥ ३९ ॥

धर्मार्थे क्षीणवित्तस्य क्षीणत्वमपि शोभते ।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥ ४० ॥

कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खंडितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरांतरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्॥ ४१ ॥

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः ।
अक्षैश्चापि युधिष्ठिरेण रमता ज्ञातो न दोषः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥४२॥

शक्तेनापि सता जनेन विदुषा कालांतरप्रेक्षिणा
वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने ।
दर्व्यव्यग्रकरेण धूममलिनेनायासयुक्तेन किं
भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥ ४३ ॥

येनास्यभ्युदितेन चंद्र गमितः क्लांतिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ४४ ॥

तवैव प्रावीण्यं जलद जगदानंदकरणं
यदंभःपालीराहरसि खलसत्त्वाज्जलनिधेः ।
निसर्गात्क्षारास्ता नयसि च कथंचिन्मधुरता-
मथासारैस्तासां युगपदुपकर्तासि जगतः ॥ ४५ ॥

दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात ।
नास्मिन्गंधो न च मधुकणा नास्ति तत्सौकुमार्यं
घूर्णन्मूर्ध्ना बत नतशिरा व्रीडया निर्जगाम ॥ ४६ ॥

भ्रातः कोकिल कूजितेन किमलं नाद्याप्यनर्घ्यो गुण-
स्तूर्ष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः कचित्कोटरे ।
प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलः
कालोऽयं शिशिरस्य संप्रति सखे नायं वसंतोत्सवः ॥ ४७॥

अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नंति ये
भ्रातश्चातक किं वृथा विरुदितैःखिन्नोऽसि विश्राम्यताम् ।
मेघः शारद एव काशधवलः पानीयरिक्तोदरो
गर्जत्येव हि केवलं भृशतरं नो बिंदुमप्युज्झति ॥ ४८ ॥

मातंगाः किमु वल्गितैः किमफलैराडंबरैर्जंबुकाः
सारंगा महिषा मदं व्रजथ किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिंधुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥४९॥

पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालांकुरा-
स्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः ।
धिक्तस्यैव जलानि पंकिलयतः पाथोजिनीं मथ्नतो
मूलान्युत्खनतः करींद्र भवतो लज्जापि नो जायते ॥५०॥

अल्पायासबलेन यत्र पतनं कृच्छ्रेण यत्रोन्नति-
र्द्वारे वेत्रलतावितानगहने कष्टप्रवेशक्रमः ।
हे सारंग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना
किं भूभृत्कटकस्थितिव्यसनिना व्यर्थं खुराः शातिताः॥ ५१॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरंग कुत्र भवता किं नाम तप्तं तपः ॥ ५२ ॥

ये पूर्वं परिपालिताः फलभरच्छायादिभिः प्राणिनो
विश्रामद्रुम कथ्यतां तव विपत्काले क ते सांप्रतम् ।
एताः संगतिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो
यासां छेदनमंतरेण पतितो नायं कुठारस्त्वयि ॥ ५३ ॥

येऽभिज्ञाः कुसुमोद्गमादनुदिनं त्वामाश्रिताः षट्पदा-
स्ते भ्राम्यंति फलार्द्धहिर्बहिरहो दृष्ट्वा न संभाषसे ।
ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यंतरे
धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥ ५४ ॥

आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलांतरं
प्रायः कंटकितं तथैव पनसं जातं द्विधोर्वारुकम् ।
आस्तेऽधोमुखमेव कादलमलं द्राक्षाफलं क्षुद्रतां
श्यामत्वं बत जांबवं गतमहो मात्सर्यदोषादिह ॥ ५५ ॥

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न छायापि परोपकारकृतये मार्गस्थितस्यापि मे ॥ ५६ ॥

परार्थे यः पीडामनुभवति भंगेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ ५७ ॥

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रांतं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ ५८ ॥

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा ।
एते तस्मिन्निवृत्ताः पुनरितरककुप्प्रांतपर्यस्तबिंबे
प्रायो भृत्यास्त्यजंति प्रचलितविभवं स्वामिनं सेवमानाः॥५९॥

अजानन्दाहात्म्यं पततु शलभो दीपदहने
स मीनोप्यज्ञानाद् बडिशयुतमश्नातु पिशितम् ।
विजानंतोप्येते वयमिह विपज्जालजटिला-
न्न मुंचामः कामानहह गहनो मोहमहिमा ॥ ६० ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् ।
प्रसन्ने त्वय्यंतः स्वयमुदितचिंतामणिगुणे
विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ६१ ॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ६२ ॥

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चांते ।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिशारैः ॥ ६३ ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचंचला
आयुर्वायुविघट्टिताभ्रपटलीलीनांबुवद्भंगुरम् ।
लोला यौवनलालसा तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधद्ध्वं बुधाः ॥ ६४ ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ६५ ॥

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पांथः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ६६ ॥



# तृतीयावलिः ।

## THIRD SERIES.



### I.

### The hare and the lion.

अस्ति मंदरनाम्नि पर्वते दुर्दांतो नामः सिंहः । स सर्वदा पशूनां वधं कुर्वन्नास्ते । ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः । मृगेंद्र किमर्थमेकदा बहुपशुघातः क्रियते । यदि प्रसादो भवति तदा वयमेव भवदाहाराय प्रत्यहमेकैकं पशुमुपढौकयामः । ततः सिंहेनोक्तम् । यद्येतदभिमतं भवतां तर्हि भवतु तत् । ततःप्रभृत्येकैकं पशुमुपकल्पितं भक्षयन्नास्ते । अथ कदाचिद् वृद्धशशकस्य वारः समायातः । सोऽचिंतयत् । यद्यहं पंचत्वं गमिष्यामि तर्हि किं मे सिंहानुनयेन । तन्मंदं मंदं गच्छामि । ततः सिंहोऽपि क्षुधापीडितः कोपात्तमुवाच । कुतस्त्वं विलंब्य समागतोऽसि । शशकोऽब्रवीत् देव नाहमपराधी । आगच्छन्पथि सिंहांतरेण बलाद्धृतः । तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि । सिंहः सकोपमाह । सत्वरं गत्वा दुरात्मानं दर्शय क्व स दुरात्मा तिष्ठति । ततः शशस्तं गृहीत्वा गभीरकूपं दर्शयितुं गतः । तत्रागत्य स्वयमेव पश्यतु स्वामी इत्युक्त्वा तस्मिन्कूपजले तस्य सिंहस्यैव प्रतिबिंबं दर्शितवान् । ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पंचत्वं गतः । अतोऽहं ब्रवीमि ।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १ ॥

Hitopadesha II.

---

## II.

## The crane and the crab.

अस्ति कस्मिंमश्चित्प्रदेशे नानाजलचरसनाथं सरः । तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान्व्यापादयितुमसमर्थः । ततश्च क्षुत्क्षामकंठः सरस्तीर उपविष्टो मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमाभिषिंचन्रुरोद । एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे । माम किमद्य त्वयाहारवृत्तिर्नानुष्ठीयते। केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते। स आह । वत्स सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया सांप्रतं प्रायोपवेशनं कृतं तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि । कुलीरकस्तत् श्रुत्वा प्राह । किं तद्वैराग्यकारणम् । स प्राह । वत्स अहमस्मिन्सरसि जातो वृद्धिं गतश्च । तन्मयैतच्छ्रुतं यद् द्वादशवार्षिक्यनावृष्टिः संपद्यते लग्ना । कुलीरक आह । कस्मात्तत् श्रुतम् । बक आह । दैवज्ञमुखात् । यतः शनैश्चरो रोहिणीशकटं भित्त्वा भौमश्च शुक्रश्च प्रयास्यति । तदेतत्सरः स्वल्पतोयं वर्तते शीघ्रं शोषं यास्यति। अस्मिन् शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्चैते सर्वे तोयाभावान्नाशं यास्यंति । तत्तेषां वियोगं द्रष्टुमहमसमर्थः । तेनैतत्प्रायोपवेशनं कृतम् । सांप्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयंते । केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छंति । अत्र पुनः सरसि ये जलचरास्ते निश्चिताः संति । तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति । ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः । माम अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति । बक आह । अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीखंडमंडितं यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेति । तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि । अथ ते तत्र विश्वासमाप-

न्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समंतात्परितस्थुः । सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठमारोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासंदेशकैर्मनांसि रंजयन्नित्यमिवाहारवृत्तिमकरोत् । अन्यस्मिन्दिने स कुलीरकेणोक्तः। माम मया सह ते प्रथमः स्नेहसंभाषः संजातः । तत्किं मां परित्यज्यान्यान्नयसि । तस्मादद्य मे प्राणत्राणं कुरु । तदाकर्ण्य सोऽपि दुष्टाशयश्चिंतितवान् । निर्विण्णोऽहं मत्स्यमांसादनेन । तदद्यैतं कुलीरकं व्यंजनस्थाने करोमि । इति विचिंत्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः । कुलीरकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत् । माम कियद् दूरे स जलाशयः। मदीयभारेणातिश्रांतस्त्वं तत्कथय । सोऽपि मंदधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह । कुलीरक कुतोऽन्यो जलाशयः । माम प्राणयात्रेयम् । तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता । त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि । इत्युक्त्वा तेन वदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च । अथ स तां बकग्रीवां समादाय शनैःशनैस्तज्जलाशयमाससाद । ततः सर्वैरेव जलचरैः पृष्टः । भोः कुलीरक किंनिमित्तस्त्वं पश्चादायातः । कुशलकारणं तिष्ठति । स मातुलोऽपि नायातः । तत्किं चिरयासि । वयं सर्वे सोत्सुकः कृतक्षणास्तिष्ठामः । एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच । मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वंचयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तन्मयायुःशेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता । तदलं संभ्रमेण । अधुना सर्वजलचराणां क्षेमं भविष्यति । अतोऽहं ब्रवीमि ।

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात्॥ १॥ Panchatantra I.

## III.

## The tale of Savitri.

### Part I.

पुरा किल मद्रेष्वश्वपतिर्नाम राजा बभूव । स धर्मात्मा ब्रह्मण्यः शरण्यः सत्यसंधो जितेंद्रियो यज्वा पौरजानपदप्रियः सर्वभूतहितरतश्चासीत् । किंत्वनपत्यः । तस्मात्सोऽपत्योत्पादनार्थं तीव्रं नियममास्थाय सावित्रीं देवतामाराधयामास । अथ कस्मिंश्चित्काले गते तस्य ज्येष्ठा महिषी गर्भमादधे । प्राप्ते काले चैकां कन्यां सुषुवे । सा सावित्र्या प्रीतया दत्तेति पिता विप्राश्च तस्याः सावित्रीत्येव नाम चक्रुः । सा नृपात्मजा विग्रहवती श्रीरिव वर्धमाना गच्छता कालेन यौवनस्था बभूव । तां कांचनीं प्रतिमामिव तेजसा ज्वलंतीं दृष्ट्वा सर्वे जना देवकन्येयं प्राप्तेति मेनिरे । तस्यास्तेजसा प्रतिवारितश्च न कोऽपि तां वरयामास । तां यौवनस्थामपि नृपतिभिरयाच्यमानां दृष्ट्वा पिता परमदुःखितोऽभवत् । तामाहूयोवाच च । पुत्रि प्रदानकालस्तेऽयम् । न च कश्चित्त्वां वृणोति । तस्माद् गुणैरात्मनः सदृशं भर्तारं स्वयमन्विच्छेति । सा तथेति पितुर्वचनमादाय सचिवैर्युता हैमं रथमास्थाय राजर्षीणां तपोवनानि जगाम सर्वाणि तीर्थान्याश्रमांश्चाभिगम्य पितुर्वेश्म निववृते । तदा स सभामध्ये भगवता नारदेन सह कथायोगेनोपविष्ट आसीत् । तां तथायांतीं दृष्ट्वा नारदोऽश्वपतिं पप्रच्छ । क्व तवेयं सुता गताभूत्कुतश्चागता किमर्थं च त्वमिमां भर्त्रे नाद्यापि प्रयच्छसीति । अश्वपतिः प्रोवाच । इयं खल्वनेनैव कार्येण प्रेषिताद्यैवागता यो भर्तानया वृतस्तं भगवाञ् श्रोतुमर्हति । इत्युक्त्वा विस्तरेण ब्रूहीति कन्यामादिदेश । एवमादिष्टा सा प्रत्युवाच । आसीच्छाल्वेषु द्युमत्सेनो नाम पृथिवीपतिः स कालेनांधो बभूव । विनष्टचक्षुषो बालपुत्रस्य तस्य राज्यं पूर्ववैरिणा छिद्रेऽस्मिन् हृतम् । ततोऽसौ महारण्यं प्रस्थितस्तपोवनं च गत्वा तपस्तेपे । तस्य राज्ञः पुत्रस्तपोवने

संवृद्धः सत्यवाननुरूपो मे भर्तेति मनसा वृत्त इति । नारदस्तु तद्वचः श्रुत्वा प्राह । बत महत्पापं सावित्र्या कृतं यदनया गुणवानपि सत्यवान्वृतः । अश्वपतिः प्राह । भगवन् किं तत्पापम् । नारदः प्रत्युवाच । असौ सर्वगुणोपेतः । किं तु गुणानाक्रम्यैक एवास्य दोषस्तिष्ठति । स च प्रयत्नेनापि नातिवर्तितुं शक्यम् । दोषस्त्वयमेव यदद्यप्रभृति संवत्सरेणायं क्षीणायुर्भूत्वा देहन्यासं करिष्यतीति । नारदस्य वचः श्रुत्वाऽश्वपतिः सावित्रीमाह । गच्छ त्वमन्यं भर्तारं वरय यतः सत्यवति महानयं दोषः । सावित्री प्राह । सकृदंशो निपतति सकृत्कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सकृत्सताम् । अतो दीर्घायुरल्पायुर्वा सगुणो निर्गुणो वा सकृन्मया भर्ता वृतो नाहमधुना द्वितीयं वृणोमीति । तत् श्रुत्वा नारदः प्रोवाच । अश्वपते तव दुहितुः स्थिरेयं बुद्धिः । तस्मात्सत्यवतेऽस्याः प्रदानमेव मे रोचते । एवमुक्त्वा नारदस्त्रिदिवं गतः । राजापि दुहितुः सर्वं वैवाहिकं कारयित्वा द्युमत्सेनाश्रमं कन्यया द्विजैश्च सार्धं पद्भ्यामेव जगाम । गत्वा च सावित्रीं मे कन्यकां स्नुषार्थे गृहाणेति द्युमत्सेनमुवाच । द्युमत्सेन आह । वयं राज्यात् च्युता वनवासमाश्रितास्तपस्विनो भूत्वा धर्मं चरामः । कथं नामेयं तव सुता वनवासक्लेशं सहिष्यते । किं तु भूयो भूयोऽश्वपतिनानुरुध्यमानो द्युमत्सेनस्तत्प्रणयमंगीचकार । ततोऽखिलानाश्रमवासिनो द्विजानाहूय नृपौ तौ यथाविधि समुद्वाहं कारयामासतुः । अश्वपतिः कन्यां यथार्हं परिच्छदं च दत्त्वा परमया मुदा युक्तः स्वभवनं ययौ । सत्यवानपि तां सर्वगुणान्वितां भार्यां लब्ध्वा मुमुदे । सापि मनसेप्सितं भर्तारं प्राप्य परं संतोषमनुबभूव । गते पितरि सा सर्वाण्याभरणानि संन्यस्य वल्कलानि काषायं वस्त्रं च जगृहे शुश्रूषातत्परतया च न केवलं भर्तुर्गुरूणामपि तुष्टिमावहत् । एवं तत्र तेषां निवसतां बहुतिथे काले व्यतीते यदा सत्यवता मर्तव्यं स काल उपस्थितः । भाविनी सावित्री नारदोक्तान्

दिवसान् गणयित्वा चतुर्थेऽहनि सत्यवता मर्तव्यमिति संचिंत्य त्रिरात्रं व्रतमुद्दिश्य दिवारात्रं स्थिताभवत् । तस्या व्रताचरणनिश्चयं श्रुत्वा द्युमत्सेनस्तस्मात्तां व्यावर्तयितुमियेष । किं तु सावित्र्युवाच । तात न संतापः कार्यः । अहं व्रतं पारयिष्यामि । व्यवसायकृतं हीदं व्यवसायश्च कारणमिति । एवमुक्तः श्वशुरस्तामनुजज्ञे । अथ भर्तृमरणदिवसे प्राप्ते प्रातरुत्थाय हुताशनं हुत्वा सर्वान् द्विजान् वृद्धाञ्श्वश्रूं श्वशुरं चाभिवाद्य सर्वेषामवैधव्याशिषः प्रत्यग्रहीत् । अनंतरं द्युमत्सेनस्तामाह । त्वया यथोद्दिष्टं व्रतं पारितमधुनाहारकालः संप्राप्तः । सावित्र्योक्तम् । अस्तं गत आदित्ये भोक्तव्यमिति मे संकल्पः । एवं संभाषमाणायां सावित्र्यां सत्यावान्स्कंधे परशुमादाय काष्ठान्याहर्तुं वनं प्रस्थितः । तं च सावित्र्यनुगंतुकामा तेन निषिध्यमानापि प्रवेच्छाऽभूत् । ततः सत्यवानाह । यदि ते गमनोत्साहस्तव प्रियं करिष्यामि । किं तु मम गुरूनामंत्रयस्व नो चेन्मामयं दोषः स्पृशेत् । एवमुक्ता सा श्वश्रूं श्वशुरं च गत्वोवाच । आर्ययार्येण चाभ्यनुज्ञातानेन सह वनं गंतुमिच्छामि । कुसुमितं वनं द्रष्टुं परं हि मे कौतूहलमिति । ततोऽनुज्ञां लब्ध्वा भर्त्रा सह सा वनं प्रतस्थे ।

Mahâbhârata.

---

IV.

The tale of Savitri.

Part II.

तौ दंपती विचित्राणि वनानि पुण्यवहा नदीः पुष्पितांश्च नगोत्तमान् दृष्ट्वा परां मुदमवापतुः । अथ सत्यवान्फलान्यादाय काष्ठानि पाटयामास। तच्छ्रमेणास्य शिरसि वेदना जज्ञे। अतः स प्रियामभिगम्याह । अस्वस्थमिवात्मानं लक्षये । तत्स्वप्तुमिच्छामि न मे स्थातुं शक्तिरिति । पतिवाक्यपरायणा सा स्वोत्संगेऽस्य शिरः कृत्वा भूतले निषसाद । अथ सा मुहूर्तादेव रक्तवाससं बद्धमौलिमादित्यसमतेजसं श्यामावदातं

रक्ताक्षं पाशहस्तं भयावहं पुरुषं सत्यवतः पार्श्वस्थितमपश्यत् । तं तथाविधमवलोक्य सावित्री प्राह । दैवतं त्वामभिजानामि । वपुरेतदमानुषम् । कस्त्वं किं चिकीर्षसि चेति मां ब्रूहि । अहं यमः क्षीणायुषः सत्यवतः प्राणानपहर्तुकामश्चेत्याख्याय यमस्तस्य कायात्पाशबद्धं वशंगतमंगुष्ठमात्रं पुरुषं बलान्निश्चकर्ष दक्षिणामुखः प्रतस्थे च । सावित्र्यपि दुःखार्ता तमेवानुगंतुमारब्धा । तामवलोक्य यमः प्राह । निवर्तस्व सावित्रि कुरुष्वास्यौर्ध्वदेहिकं कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वयेति। तत उभयोरेवंविधः संवादः प्रचक्रमे ।

**सावित्र्युवाच ।**

यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मयापि तत्र गंतव्यमेष धर्मः सनातनः ॥
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥
नानात्मवंतो हि वने चरंति धर्मं च वासं च परिश्रमं च ।
विज्ञानतो धर्ममुदाहरंति तस्मात्संतो धर्ममाहुः प्रधानम् ॥

**यम उवाच ।**

निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यंजनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं ददानि ते सर्वमनिंदिते वरम् ॥

**सावित्र्युवाच ।**

च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसंनिभः ॥

**यम उवाच ।**

ददानि ते सर्वमनिंदिते वरं यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वनि ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् ॥

सावित्र्युवाच ।

कुतः श्रमो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ॥
सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं ततः सतां संनिवसेत्समागमे ॥

यम उवाच ।

मनोनुकूलं बुधबुद्धिवर्धनं त्वयेदमुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ॥

सावित्र्युवाच ।

हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः ।
न च स्वधर्मं प्रजहातु मे गुरुर्द्वितीयमेतद्वरयामि ते वरम् ॥

यम उवाच ।

स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ॥

सावित्र्युवाच ।

प्रजास्त्वयैता नियमेन संयता नियम्य चैता नयसे निकामया ।
अतो यमत्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया ॥
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥

यम उवाच ।

पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदीच्छसि ॥

सावित्र्युवाच ।

ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् ।
कुलस्य संतानकरं च यद्भवेत्तृतीयमेतं वरयामि ते वरम् ॥

यम उवाच ।

कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥

सावित्र्युवाच ।

न दूरमेतन्मम भर्तृसन्निधौ मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एवच ॥
विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्मेण च रंजिताः प्रजास्ततस्तवेहेश्वर धर्मराजता ॥
आत्मन्यपि न विश्वासस्तावान्भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥

यम उवाच ।

उदाहृतं ते वचनं यदंगने शुभे न तादृक् त्वदृते मया श्रुतम् ।
अनेन तुष्टोऽस्मि विनास्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥

सावित्र्युवाच ।

ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यः कुलोद्वहम् ।
शतं सुतानां बलवीर्यशालिनामिमं चतुर्थं वरयामि ते वरम् ॥

यम उवाच ।

शतं सुतानां बलवीर्यशालिनां भविष्याति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥

सावित्र्युवाच ।

सतां सदा शाश्वतधर्मवृत्तिः संतो न सीदंति न च व्यथंते ।
सतां सद्भिर्नाफलः संगमोऽस्ति सद्भ्यो भयं नानुवर्तंति संतः ॥
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
संतः परार्थं कुर्वाणा नावेक्षंते प्रतिक्रियाम् ॥

**यम उवाच ।**

यथा यथा भाषसि धर्मसंमितं मनोनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रातिमं पतिव्रते ॥

**सावित्र्युवाच ।**

न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुम् ॥
वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥

यमस्तथेत्युक्त्वा पाशं मुक्त्वा च सावित्रीमाह । हे कुलनंदिनि एष ते भर्ता मया मुक्तः । स त्वया सार्धं चतुर्वर्षशतायुरवाप्स्यति । इत्युक्त्वासौ स्वलोकं ययौ । गते तस्मिन् सावित्री यावत्सत्यवंतमभिगम्यावलोकयति तावत्स लब्धसंज्ञो भूत्वा प्रोष्येवागतोऽहं क्वासौ श्यामः पुरुषो गतस्तवोत्संगे प्रसुप्तोऽहं घोरं तमो महौजसं पुरुषं चापश्यं किमयं स्वप्न उत सत्यमिति तां सोत्कठं पप्रच्छ । सावित्री प्रत्युवाच । अधुना रजनी व्यवगाहते श्वस्ते सर्वमाख्यास्मि । संप्रति निवृत्तो दिवाकरो नक्तंचराश्च क्रूराभिभाषिणश्चरंति । तद्यदि तेऽभिरोचते तत इमां क्षपामत्रैवोषित्वा श्वो गृहं यास्याव इति । सत्यवानाह । दिवापि मयि निष्क्रांते मम गुरू संतप्येते । मदर्थं तयोरद्य कावस्थेति न जाने । माता वृद्धा पिताप्यंधस्तयोरहं यष्टिः किल । अतः पित्रोः सकाशं गमनमेव वरमिति सावित्रीमुक्त्वा त्वरायुक्तस्तया पतिव्रतया सहाश्रमं प्रायात् । एतस्मिन्नेव काले द्युमत्सेनो लब्धचक्षुः प्रसन्नया दृष्ट्या सर्वं ददर्श । पुत्रमनागतं विलोक्य पितरौ परमामार्तिं गत्वाश्रमान्नदीः सरांसि वनानि च विचिन्वंतौ परं परिश्रमं जग्मतुः । सुतस्य बाल्यवृत्तानि तानि तानि स्मृत्वा शोककर्षितौ कथमप्याश्रमवासिभिर्ऋषिभिः परिसांत्वितौ । तस्मिन्नेव क्षणे भर्त्रा सह सावित्र्याश्रमं प्रविवेश । तावुभौ कुशलौ दृष्ट्वा सर्वे ते परमानंदमवापुः । द्युमत्सेन लब्धचक्षुषं दृष्ट्वा

## VI.

### Repudiation of *S*akuntala by Dushyanta.

### Part I.

**पुरोहितः** ( पुरो गत्वा ) एते विधिवदर्चितास्तपस्विनः । काश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

**राजा** । अवहितोऽस्मि ।

**ऋषयः** । ( हस्तानुद्यम्य ) विजयस्व राजन् ।

**राजा** । सर्वानभिवादये ।

**ऋषयः** । इष्टेन युज्यस्व ।

**राजा** । अपि निर्विघ्नतपसो मुनयः ।

**ऋषयः** । कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १ ॥

**राजा** । अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।

**ऋषयः** । स्वाधीनकुशलाः सिद्धिमंतः । स भवंतमनामयप्रश्नपूर्वकामिदमाह ।

**राजा** । किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः** । यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुंतला मूर्तिमति च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥२॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी** । आर्य किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।

**यम उवाच ।**

यथा यथा भाषसि धर्मसंमितं मनोनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रातिमं पतिव्रते ॥

**सावित्र्युवाच ।**

न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुम् ॥
वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥

यमस्तथेत्युक्त्वा पाशं मुक्त्वा च सावित्रीमाह । हे कुलनंदिनि एष ते भर्ता मया मुक्तः । स त्वया सार्धं चतुर्वर्षशतायुरवाप्यस्यति । इत्युक्त्वासौ स्वलोकं ययौ । गते तस्मिन् सावित्री यावत्सत्यवंतमाभिगम्यावलोकयति तावत्स लब्धसंज्ञो भूत्वा प्रोष्येवागतोऽहं कासौ श्यामः पुरुषो गतस्तवोत्संगे प्रसुप्तोऽहं घोरं तमो महौजसं पुरुषं चापश्यं किमयं स्वप्न उत सत्यमिति तां सोत्कंठं पप्रच्छ । सावित्री प्रत्युवाच । अधुना रजनी व्यवगाहते श्वस्ते सर्वमाख्यास्मि । संप्रति निवृत्तो दिवाकरो नक्तंचराश्च क्रूराभिभाषिणश्चरंति । तद्यदि तेऽभिरोचते तत इमां क्षपामत्रैवोषित्वा श्वो गृहं यास्याव इति । सत्यवानाह । दिवापि मयि निष्क्रांते मम गुरू संतप्येते । मदर्थं तयोरद्य कावस्थेति न जाने । माता वृद्धा पिताप्यंधस्तयोरहं यष्टिः किल । अतः पित्रोः सकाशं गमनमेव वरमिति सावित्रीमुक्त्वा त्वरायुक्तस्तया पतिव्रतया सहाश्रमं प्रायात् । एतस्मिन्नेव काले द्युमत्सेनो लब्धचक्षुः प्रसन्नया दृष्ट्या सर्वं ददर्श । पुत्रमनागतं विलोक्य पितरौ परमामार्तिं गत्वाश्रमान्नदीः सरांसि वनानि च विचिन्वंतौ परं परिश्रमं जग्मतुः । सुतस्य बाल्यवृत्तानि तानि तानि स्मृत्वा शोककर्षितौ कथमप्याश्रमवासिभिर्ऋषिभिः परिसांत्वितौ । तस्मिन्नेव क्षणे भर्त्रा सह सावित्र्याश्रमं प्रविवेश । तावुभौ कुशलौ दृष्ट्वा सर्वे ते परमानंदमवापुः । द्युमत्सेन लब्धचक्षुषं दृष्ट्वा

## VI.

### Repudiation of *S*akuntala by Dushyanta.

### Part I.

**पुरोहितः** ( पुरो गत्वा ) एते विधिवदर्चितास्तपस्विनः । काश्यपसंदेशमुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

**राजा** । अवहितोऽस्मि ।

**ऋषयः** । ( हस्तानुद्यम्य ) विजयस्व राजन् ।

**राजा** । सर्वानभिवादये ।

**ऋषयः** । इष्टेन युज्यस्व ।

**राजा** । अपि निर्विघ्नतपसो मुनयः ।

**ऋषयः** । कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १ ॥

**राजा** । अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।

**ऋषयः** । स्वाधीनकुशलाः सिद्धिमंतः । स भवंतमनामयप्रश्नपूर्वकमिदमाह ।

**राजा** । किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः** । यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुंतला मूर्तिमति च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥२॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी** । आर्य किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।

नापेक्षितो गुरुजनोऽनया न त्वयापि पृष्टो बंधुः ।
एकैकमेव चरिते किं भणतु एक एकस्य ॥ ३ ॥

**शकुंतला** । ( आत्मगतम् ) । किं नु खल्वार्यपुत्रो भणति ।

**राजा** । ( किमिदमुपन्यस्तम् ।

**शकुंतला** । ( आत्मगतम् ) पावकः खल्वेष वचनोपन्यासः ।

**शा०** । कथमिदं नाम । भवंत एव सुतरां लोकवृत्तांतनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशंकते ।
अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबंधुभिः ॥ ४ ॥

**राजा** । किं चात्रभवती मया परिणीतपूर्वा ।

**शकुं०** । (सविषादम् । आत्मगतम्) । हृदय सांप्रतं त आशंका ।

**शा०** ।

किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ।

**राजा** । कुतोऽयमसत्कल्पनाप्रश्नः ।

**शा०** । मूर्च्छंत्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ ५ ॥

**राजा** । विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी** । जाते मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुंठनम् । ततस्त्वां भर्ताभिज्ञास्यति । ( इति यथोक्तं करोति । )

**राजा** । ) शकुंतलां निर्वर्ण्य । आत्मगतम् । )

इदमुपनतमेवं रूपमक्लिष्टकांति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुंदमंतस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुम् ॥ ६ ॥

( इति विचारयन्स्थितः । )

राजा । तापसवृद्धे

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागंतरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयंति ॥ ९ ॥

शकुं०।(सरोषम्)अनार्य आत्मनो हृदयानुमानेन प्रेक्षसे। क इदानीं मन्यो धर्मकंचुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतं प्रतिपत्स्यते ।

राजा । ( आत्मगतम् ) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ १० ॥

( प्रकाशम् )। भद्रे प्रथितं दुष्यंतस्य चरितम् । तथापीदं न लक्षये।

शकुं० । सुष्ठु तावदत्र स्वच्छंदचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्यासमुपगता । ( इति पटांतेन मुखमावृत्य रोदिति । )

शा० । इत्थमात्मकृतमप्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ ११ ॥

राजा । अयि भोः किमत्रभवतीप्रत्ययादेवास्मान् संभृतदोषैराधिक्षिपथ

शा० । ( सासूयम् ) श्रुतं भवद्भिरधरोत्तरम् ।

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते संतु किलाप्तवाचः ॥ १२ ॥

नापेक्षितो गुरुजनोऽनया न त्वयापि पृष्टो बंधुः ।
एकैकमेव चरिते किं भणतु एक एकस्य ॥ ३ ॥

**शकुंतला** । ( आत्मगतम् ) । किं नु खल्वार्यपुत्रो भणति ।

**राजा** । ( किमिदमुपन्यस्तम् ।

**शकुंतला** । ( आत्मगतम् ) पावकः खल्वेष वचनोपन्यासः ।

**शा०** । कथमिदं नाम । भवंत एव सुतरां लोकवृत्तांतनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशंकते ।
अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबंधुभिः ॥ ४ ॥

**राजा** । किं चात्रभवती मया परिणीतपूर्वा ।

**शकुं०** । (सविषादम् । आत्मगतम्) । हृदय सांप्रतं त आशंका ।

**शा०** ।

किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ।

**राजा** । कुतोऽयमसत्कल्पनाप्रश्नः ।

**शा०** । मूर्च्छंत्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ ५ ॥

**राजा** । विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी** । जाते मुहूर्तं मा लज्जस्व । अपनेष्यासि तावत्तेऽवगुंठनम् । ततस्त्वां भर्ताभिज्ञास्यति । ( इति यथोक्तं करोति । )

**राजा** । ) शकुंतलां निर्वर्ण्य । आत्मगतम् । )

इदमुपनतमेवं रूपमक्लिष्टकांति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुंदमंतस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुम् ॥ ६ ॥
( इति विचारयन्स्थितः । )

**राजा** । तापसवृद्धे

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागंतरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयंति ॥ ९ ॥

**शकुं०** ।(सरोषम्)अनार्य आत्मनो हृदयानुमानेन प्रेक्षसे। क इदानीमन्यो धर्मकंचुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतं प्रतिपत्स्यते ।

**राजा** । ( आत्मगतम् ) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ १० ॥

( प्रकाशम् ) । भद्रे प्रथितं दुष्यंतस्य चरितम् । तथापीदं न लक्षये।

**शकुं०** । सुष्ठु तावदत्र स्वच्छंदचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्यासमुपगता । ( इति पटांतेन मुखमावृत्य रोदिति । )

**शा०** । इत्थमात्मकृतमप्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ ११ ॥

**राजा** । अयि भोः किमत्रभवतीप्रत्ययादेवास्मान् संभृतदोषैराधिक्षिपथ

**शा०** । ( सासूयम् ) श्रुतं भवद्भिरधरोत्तरम् ।

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते संतु किलाप्तवाचः ॥ १२ ॥

**राजा॰** । भोः सत्यवादिन् अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ।

**शा॰** । विनिपातः ।

**राजा** । विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत् ।

**शारद्वतः** । शार्ङ्गरव किमुत्तरेण । अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । ( राजानं प्रति )

तदेषा भवतः कांता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ १३ ॥

गौतमि गच्छाग्रतः ।

( इति प्रस्थिताः )

**शकुं॰** । कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परिदेविनीं परित्यजथ । ( इत्यनुप्रतिष्ठिते )

**गौतमी** । ( स्थित्वा ) वत्स शार्ङ्गरव अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुंतला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्री करिष्यति ।

**शा॰** । ( सरोषं निवृत्य ) किं पुरोभागिनि स्वातंत्र्यमवलंबसे

( शकुंतला भीता वेपते )

**शा॰** । शकुंतले

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ १४ ॥

तिष्ठ । साधयामो वयम् ।

**राजा** । भोस्तपस्विन् किमत्रभवतीं विप्रलभसे । कुतः

कुमुदान्येव शशांकः सविता बोधयति पंकजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ १५ ॥

नाल्पसन्निचयः कश्चिदासीत्तस्मिन्पुरोत्तमे ।
कुटुंबी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ १७ ॥
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ १८ ॥
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ।
मुदिता शीलवृत्ताभ्यां महर्षय इवामलाः ॥ १९ ॥
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेंद्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ २० ॥
नास्तिको नानृती वापि न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान्विद्यते क्वचित् ॥ २१ ॥
नाषडंगविदत्रास्ति नाव्रतो नाबहुश्रुतः ।
न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ २२ ॥
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ २३ ॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ २४ ॥
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ २५ ॥
क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वकर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ २६ ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेंद्रेण धीमता ॥ २७ ॥
नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः ।
सा योजने द्वे च भूयः सत्यनामा प्रकाशते ॥ २८ ॥
तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चंद्रमाः ॥ २९ ॥

**राजा०** । भोः सत्यवादिन् अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ।

**शा०** । विनिपातः ।

**राजा** । विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत् ।

**शारद्वतः** । शार्ङ्गरव किमुत्तरेण । अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । ( राजानं प्रति )

तदेषा भवतः कांता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ १३ ॥

गौतमि गच्छाग्रतः ।

( इति प्रस्थिताः )

**शकुं०** । कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परिदेविनीं परित्यजथ । ( इत्यनुप्रतिष्ठिते )

**गौतमी** । ( स्थित्वा ) वत्स शार्ङ्गरव अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुंतला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्री करिष्यति ।

**शा०** । ( सरोषं निवृत्य ) किं पुरोभागिनि स्वातंत्र्यमवलंबसे

( शकुंतला भीता वेपते )

**शा०** । शकुंतले

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ १४ ॥

तिष्ठ । साधयामो वयम् ।

**राजा** । भोस्तपस्विन् किमत्रभवतीं विप्रलभसे । कुतः

कुमुदान्येव शशांकः सविता बोधयति पंकजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ १५ ॥

नाल्पसन्निचयः कश्चिदासीत्तस्मिन्पुरोत्तमे ।
कुटुंबी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ १७ ॥
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ १८ ॥
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ।
मुदिता शीलवृत्ताभ्यां महर्षय इवामलाः ॥ १९ ॥
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेंद्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ २० ॥
नास्तिको नानृती वापि न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान्विद्यते क्वचित् ॥ २१ ॥
नाषडंगविदत्रास्ति नाव्रतो नाबहुश्रुतः ।
न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥ २२ ॥
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ २३ ॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ २४ ॥
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ २५ ॥
क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वकर्मनिरतास्त्रीन्वर्णानुपचारिणः ॥ २६ ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेंद्रेण धीमता ॥ २७ ॥
नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः ।
सा योजने द्वे च भूयः सत्यनामा प्रकाशते ॥ २८ ॥
तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चंद्रमाः ॥ २९ ॥

तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥३०॥

Ramayana.

---

## IX.

### The hermitage of Jabali.

अवलोक्य चाहमचिंतयम् । अहो प्रभावस्तपसाम् । इयमस्य शांतापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरंती सौदामिनीव चक्षुषः प्रतिहंति तेजांसि । सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य । नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति । किमुत सकलभुवनतलवंदितचरणानामनवरततपःक्षपितमलानां करतलामलकफलवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम् । पुण्यानि हि नामग्रहणान्यपि महामुनीनाम् । किं पुनर्दर्शनानि । धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना। पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरामिव नलिनासनमपगतान्यव्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः शृण्वंतः समुपासते । सरस्वत्यपि धन्या यास्य सततमतिप्रसन्ने करुणाजलनिस्यंदिन्यगाधगांभीर्ये मुखकमलसंपर्कमनुभवंती निवसति हंसीव मानसे । धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमंडलनिवासाभिमानमंबरतलम् । प्रायो महाभूतानामपि दुरभिभवानि भवंति तेजांसि। सर्वतेजस्विनामयं चाग्रणीः।द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना । निष्कंपेव क्षितिरेतदवष्टंभात् । एष प्रवाहः करुणारसस्य संतरणसेतुः संसारसिंधोराधारः क्षमांभसां परशुस्तृष्णालतागहनस्य सागरः संतोषामृतस्योपदेष्टा सिद्धिमार्गस्यास्तगिरिरसद्ग्रहस्य मूलमुपशमतरोर्नाभिः प्रज्ञाचक्रस्य स्थितिवंशो धर्मध्वजस्य तीर्थं सर्वविद्यावताराणां वडवानलो लोभार्ण-

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयंतारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥१५॥
निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥१६॥
अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलंबिनीर्जटाः कपोलदेशे कलमाग्रपिंगलाः ॥ १७ ॥
मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशांकलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥१८॥
अवैमि सौभाग्यमदेन वंचितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥१९॥
कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।
तदर्धभागेन लभस्व कांक्षितं वरं तमिच्छामि च साधु वेदितुम् ॥२०॥
इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानंजननेत्रमैक्षत ॥ २१ ॥
सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमंभोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥ २२ ॥
इयं महेंद्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ २३ ॥
यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ २४ ॥
द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः२५॥
न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ २६ ॥
अगूढसद्भावमितींगितज्ञया निवेदितो नैष्ठिकसुंदरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यंजितहर्षलक्षणः ॥ २७ ॥

तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥३०॥

Ramayana.

---

## IX.

### The hermitage of Jabali.

अवलोक्य चाहमचिंतयम् । अहो प्रभावस्तपसाम् । इयमस्य शांतापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरंती सौदामिनीव चक्षुषः प्रतिहंति तेजांसि । सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य । नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति । किमुत सकलभुवनतलवंदितचरणानामनवरततपःक्षपितमलानां करतलामलकफलवदाखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम् । पुण्यानि हि नामग्रहणान्यपि महामुनीनाम् । किं पुनर्दर्शनानि । धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना। पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरामिव नलिनासनमपगतान्यव्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः शृण्वंतः समुपासते । सरस्वत्यपि धन्या यास्य सततमतिप्रसन्ने करुणाजलनिस्यंदिन्यगाधगांभीर्ये मुखकमलसंपर्कमनुभवंती निवसति हंसीव मानसे । धराणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमंडलनिवासाभिमानमंबरतलम् । प्रायो महाभूतानामपि दुरभिभवानि भवंति तेजांसि। सर्वतेजस्विनामयं चाग्रणीः।द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना । निष्कंपेव क्षितिरेतदवष्टंभात् । एष प्रवाहः करुणारसस्य संतरणसेतुः संसारसिंधोराधारः क्षमांभसां परशुस्तृष्णालतागहनस्य सागरः संतोषामृतस्योपदेष्टा सिद्धिमार्गस्यास्तगिरिरसद्ग्रहस्य मूलमुपशमतरोर्नाभिः प्रज्ञाचक्रस्य स्थितिवंशो धर्मध्वजस्य तीर्थं सर्वविद्यावताराणां वडवानलो लोभार्ण-

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयंतारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥१५॥
निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥१६॥
अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलंबिनीर्जटाः कपोलदेशे कलमाग्रपिंगलाः ॥ १७ ॥
मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशांकलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥१८॥
अवैमि सौभाग्यमदेन वंचितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥१९॥
कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।
तदर्धभागेन लभस्व कांक्षितं वरं तमिच्छामि च साधु वेदितुम् ॥२०॥
इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानंजननेत्रमैक्षत ॥ २१ ॥
सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमंभोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥ २२ ॥
इयं महेंद्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ २३ ॥
यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ २४ ॥
द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः२५॥
न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ २६ ॥
अगूढसद्भावमितींगितज्ञया निवेदितो नैष्ठिकसुंदरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यंजितहर्षलक्षणः ॥ २७ ॥

अथाग्रहस्ते मुकुलीकृतांगुलौ समर्पयंती स्फटिकाक्षमालिकाम् ।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥ २८ ॥
यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलंघनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥ २९ ॥
अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।
अमंगलाभ्यासरतिं विचिंत्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥ ३० ॥
अवस्तुनिर्बंधपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलंबनम् ॥ ३१ ॥
त्वमेव तावत्परिचिंतय स्वयं कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिंदुवर्षि च ॥ ३२ ॥
चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।
अलक्तकांकानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥ ३३ ॥
इयं च तेऽन्या पुरतो विडंबना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति॥ ३४॥
द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।
कला च सा कांतिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥ ३५॥
वपुर्विरूपाक्षमलक्ष्यजन्मता दिगंबरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ३६॥
निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥ ३७ ॥
इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुंचितभ्रूलतमाहिते तया विलोचने तिर्यगुपांतलोहिते ॥ ३८ ॥
उवाच चैनं परमार्थतो हरं न वेत्सि नून यत एवमात्थ माम् ।
अलोकसामान्यमचिंत्यहेतुकं द्विषंति मंदाश्चरितं महात्मनाम् ॥ ३९॥
विपत्प्रतीकारपरेण मंगलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः॥ ४०॥

अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः ।
न भीमरूपः शिव इत्युदीर्यते न संति याथार्थ्यविदः पिनाकिनः ॥४१॥
विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालंबि दुकूलधारि वा ।
कपालि वा स्यादथवेंदुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥ ४२ ॥
असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमंदा रजोरुणांगुली ॥ ४३ ॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनंत्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥४४॥
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥ ४५ ॥
निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्॥४६॥
इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललंबे वृषराजकेतनः ॥ ४७ ॥

तं वीक्ष्य वेपथुमती सरसांगयष्टि—
निक्षेपणाय पदमुद्धृतमुद्वहंती ।
मार्गाचलव्यतिकराकुलितेव सिंधुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ४८ ॥

अद्य प्रभृत्यवनतांगि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चंद्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ४९ ॥

Kumarasambhava V.

# XI.

## The prologue to the Ratnavali.

**सूत्रधारः** । अमलतिप्रसंगेन । अद्याहं वसंतोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः । यथास्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालंकृता रत्नावली नाम नाटिका कृता । सा चास्माभिः श्रुता । न तु प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्धया यथावत्प्रयोगेन त्वया नाटयितव्येति । ( परिक्रम्यावलोक्य च ) । तद्यावदिदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं संपादयामि । ( परिषदमवलोक्य ) आवर्जितानीव सकलसामाजिकानां मनांसीति मे निश्चयः । यतः

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वांछितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ १ ॥

तद्यावद्गृहं गत्वा गृहिणीमाहूय संगीतकमनुतिष्ठामि । ( परिक्रम्य नेपथ्याभिमुखमवलोक्य च ) इदमस्मदीयं गृहम् । यावत्प्रविशामि । ( प्रविश्य ) आर्ये इतस्तावत् ।

( प्रविश्य )

**नटी** । आर्यपुत्र इयमस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।

**सूत्रधारः** । आर्ये रत्नावलीदर्शनोत्सुकोऽयं राजलोकः । तद्गृह्यतां नेपथ्यम् ।

**नटी** ( निःश्वस्य सोद्वेगम् ) आर्यपुत्र निश्चिंत इदानीमासि त्वम् । तत्कस्मान्न नृत्यसि । मम पुनर्मंदभाग्याया एकैव दुहिता । सापि

त्वया कुत्रापि देशांतरे दत्ता । तदेवं दूरदेशास्थितेन भर्त्रा सह कथं तस्याः पाणिग्रहणं भविष्यतीत्यनया चिंतयास्मापि मे न प्रतिभाति । तत्किं पुनर्नर्तितव्यम् ।

**सूत्रधारः** । आर्ये दूरस्थेनेत्यलमुद्वेगेन । पश्य ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यंतात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥२॥

( नेपथ्ये )

साधु । भरतपुत्र साधु । एवमेतत् कः सदेहः । ( द्वीपादित्यादि पठति )

**सूत्रधारः** । ( आकर्ण्य नेपथ्याभिमुखमवलोक्य ) आर्ये किमतः परं विलंबसे । नन्वयं मम यवीयान्भ्राता गृहीतयौगंधरायणभूमिकः प्राप्त एव । तदेहि वयमप्यनंतरकरणीयवेषवशेनापरभूमिकया सज्जीभवाम ।

Ratnavali I.

---

## XII.

The course of the cloud messenger from Brahmavarta to Kailasa.

ब्रह्मावर्तं जनपदमथ छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गांडीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ १ ॥
हित्वा हालामभिमतरसां रेवतीलोचनांकां
बंधुप्रीत्या समरविमुखो लांगली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मंतःशुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥ २ ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपंक्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शंभोः केशग्रहणमकरोदिंदुलग्नोर्मिहस्ता ॥ ३ ॥
तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलंबी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगंभः ।
संसर्पंत्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासंगमेवाभिरामा ॥ ४ ॥
आसीनानां सुरभितशिलं नाभिगंधैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृंगं निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपंकोपमेयाम् ॥ ५ ॥
तं चेद्वायौ सरति सरलस्कंधसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ६ ॥
ये संरंभोत्पतनरभसा स्वांगभंगाय तस्मि-
न्मुक्ताध्वानं सपदि शरभा लंघयेयुर्भवंतम् ।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णा-
न्के वा न स्युः परिभवपदं निष्फलारंभयत्नाः ॥ ७ ॥
तत्र व्यक्तं दृषदि चरणन्यासमर्धेंदुमौलेः
शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
संकल्पंते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ८ ॥
शब्दायंते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।

निर्ह्रादस्ते मुरज इव चेत्कंदरेषु ध्वनिः स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ९ ॥
प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषा-
न्हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौंचरंध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥ १० ॥
गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृंगोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यंबकस्याट्टहासः ॥ ११ ॥
हित्वा तस्मिन्भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।
भंगीभक्त्या विरचितवपुः स्तंभितांतर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ १२ ॥
हेमांभोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेंद्रम् ॥ १३ ॥

Meghaduta.

---

## XIII.

### Kapinjala's account of himself after Pundarika's death.

श्रूयतां गंधर्वराजपुत्रि । तथा कृतार्तप्रलापामपि त्वामहमेकाकिनी-मुत्सृज्य वयस्यस्नेहादाबद्धपरिकरः क्व मे प्रियसुहृदमपहृत्य गच्छसीत्यभिधाय पुरुषं तमनुबध्नञ् जवेनोदपतम् । स तु मे प्रतिवचनम-

दत्त्वैव गीर्वाणवर्त्मनि विस्मयोत्फुल्लनयनैरालोक्यमानो वैमानिकैरंबरसरः-कुमुदाकारं तारकागणमतिक्रम्य चंद्राभिरामसकललोकं चंद्रलोकमागमत्। तत्र च महोदयाख्यायां सभायामिंदुकांतमये महति पर्यंके तत्पुंडरीकशरीरं स्थापयित्वा मामवादीत्। कपिंजल जानीहि मां चंद्रमसम्। अहं खलूदयगतो जगदनुग्रहाय स्वव्यापारमनुतिष्ठन्ननेन ते प्रियवयस्येन कामापराधाज्जीवितं समुत्सृजता निरपराधः संशप्तः। दुरात्मन्निंदुहतक यथाहं त्वया करैः संतापित उत्पन्नानुरागोऽप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमिभूतेऽस्मिन्भारते वर्षे जन्मनि जन्मन्येवमेव प्राप्तानुरागोऽप्राप्तसमागमसुखस्तीव्रतमां हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसीति। अहं तु तेनास्य शापहुतभुजा धगित्युद्दीपित इव निरागाः किमनेनात्मदोषानुबंधेन निर्विवेकबुद्धिना शप्तोऽस्मीत्युत्पन्नकोपस्त्वमपि मत्तुल्यसुखदुःख एव भविष्यसीति प्रतिशापमस्मै प्रायच्छम्। अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि। वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसः कुलाल्लब्धजन्मनि गौर्यामुत्पन्ना। तया चायं भर्ता स्वयं वृतोऽनेन च संप्रति स्वयंकृतादेव शापदोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यमन्यथा जन्मनि जन्मनीत्येषा वीप्सैव न चरितार्था भवति। तद्यावदयं शापदोषो व्यपैति तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशोभूदिति मयेदमुत्क्षिप्यानीतम्। वत्सा च महाश्वेता समाश्वासिता। तदिदमत्र मत्तेजसाप्यायितमाशापक्षयात्स्थितम्। अधुना त्वं गत्वा वृत्तांतमिमं श्वेतकेतवे निवेदय। महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियामपि कांचित्करोतीत्युक्त्वा मां व्यसर्जयत्।

अहं तु विनाकृतो वयस्येन शोकावेशांधो गीर्वाणवर्त्मना धावन्नन्यतममतिक्रोधनं वैमानिकमलंघयम्। स तु मां दहन्निव रोषहुतभुजा भ्रुकुटीविकरालेन चक्षुषा निरीक्ष्याब्रवीत्। दुरात्मन्मिथ्यातपोबलगर्वित यदेवमतिविस्तीर्णे गगनमार्गे त्वयाहमुद्दामप्रचारिणा तुरंगमेणेवोल्लंघित-

स्तस्मात्तुरंगम एव भूत्वा मर्त्यलोकेऽवतर । अहं तु तमुद्बाष्पपक्ष्मा कृतांजलिरवदम् । भगवन् वयस्यशोकांधेन त्वं मयोल्लंघितो नावज्ञानात्तत्प्रसीदेमं शापमपसंहरेति । स तु मां पुनरवादीत् । दत्त एव शापः संप्रति मया नान्यथा भवितुमर्हति । तदेतत्ते करोमि । कियंतमपि कालं यस्यैव वाह्यतामुपयास्यासि तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि । एवमुक्तस्तु पुनरहमवदम् । भगवन् यद्येवं ततो विज्ञापयामि तेनापि मे प्रियवयस्येन चंद्रमसा सह शापदोषान्मर्त्यलोक एवोत्पतव्यं तदेतावंतमपि भगवान्प्रसादं करोतु मे दिव्येन चक्षुषावलोक्य यथा तुरंगमत्वेऽपि मे तेनैव सहावियोगेन कालो यायादिति । स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवदीत् । अनया स्नेहलतया ते ममार्द्रितं हृदयं तदालोकितं मयोज्जयिन्यामपत्यस्य हेतोस्तपस्यतस्तारापीडनाम्नो राज्ञश्चंद्रमसा तनयत्वमुपगंतव्यं वयस्येनापि ते पुंडरीकेण तन्मंत्रिण एव शुकनासनाम्नस्त्वमपि तस्यैव परमोपकारिणश्चंद्रात्मनो राजपुत्रस्य वाहनतामुपयास्यसीति । अहं तु तद्वचनानंतरमेवाधःस्थिते महोदधौ न्यपतम् । तस्माच्च तुरंगीभूयोदतिष्ठम् । संज्ञा तु मे तुरंगमत्वेऽपि नैवापयाता येनायं मयास्यैवार्थस्य कृते किन्नरमिथुनानुसारी भूमिमेतामानीतः । तदेष चंद्रमसोऽवतारश्चंद्रापीडः । योऽप्यसौ प्राक्तनादेवानुरागसंस्काराদभिलषंस्त्वयाजानंत्या शापाग्निना निर्दग्धः सोऽपि मे वयस्यस्य पुंडरीकस्यावतार इति ।

Kadambari,

---

## XIV.

### The omnipresent form of Vishnu.

**श्रीभगवानुवाच ।**

**पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ १ ॥**

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ २ ॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ३ ॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ४ ॥

संजय उवाच ।

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ५ ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ ६ ॥
दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ।
सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥ ७ ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ ८ ॥
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥ ९ ॥
ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥ १० ॥

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ ११ ॥
अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोनंतरूपम् ।
नांतं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपम् ॥ १२ ॥
किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतोदीप्तिमंतम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समंताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १३ ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १४ ॥
अनादिमध्यांतमनंतवीर्यमनंतबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपंतम् ॥ १५ ॥
द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ १६ ॥
अमी हि त्वां सुरसंघा विशंति केचिद्भीताः प्रांजलयो गृणंति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवंति त्वां स्तुतिभिः पुष्कलाभिः १७
रुद्रादित्या वसवो ये च साध्यां विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गंधर्वयक्षासुरसिद्धसंघा वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥ १८ ॥
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ १९ ॥
नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितांतरात्मा धृतिं न विंदामि शमं च विष्णो ॥२०॥
दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २१ ॥
अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥ २२ ॥
वक्त्राणि ते त्वरमाणा विशंति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनांतरेषु संदृश्यंते चूर्णितैरुत्तमांगैः ॥ २३ ॥
यथा नदीनां बहवोंबुवेगाः समुद्रमेवाभिमुखा द्रवंति ।
तथा तवामी नरलोकवीरा विशंति वक्त्राण्यभिविज्वलंति ॥ २४ ॥
यथा प्रदीप्तं ज्वलनं पतंगा विशंति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशंति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २५ ॥
लेलिह्यसे ग्रसमानः समंताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रपतंति विष्णो ॥ २६ ॥

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवंतमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥ २७ ॥

Bhagavadgita XI.

---

## XV.

### Rama abandoning Sita.

रामः । कथं प्रियवचना वक्षसि प्रसुप्तैव । ( निर्वर्ण्य सस्नेहम् )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चंदनरसः ।
अयं कंठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ १ ॥

( प्रविश्य ) प्रतीहारी । देव उपस्थितः ।

रामः । अये कः ।

प्रती० । आसन्नपरिचारको देवस्य दुर्मुखः ।

रामः । ( स्वगतम् ) शुद्धांतचारी दुर्मुखः । स मया पौरजानपदानपसर्पितुं प्रयुक्तः । ( प्रकाशम् ) आगच्छतु ।

( प्रतीहारी निष्क्रांता ) ।

( प्रविश्य ) दुर्मुखः ( स्वगतम् ) । हा कथं सीतादेव्या ईदृशमचिंतनीयं जनापवादं देवस्य कथयिष्यामि । अथवा नियोगः खल्वीदृशो मंदभाग्यस्य ।

( सीता उत्स्वप्नायते । हा आर्यपुत्र कुत्रासि )

रामः । अये सैवेयं रणरणकदायिनी चिरदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति ।

दुर्मु० । ( उपसृत्य ) । जयतु जयतु देवः ।

रामः । ब्रूहि यदुपलब्धम् ।

दुर्मु० । उपस्तुवंति देवं पौरजानपदा विस्मारिता वयं महाराजदशरथस्य रामदेवेनेति ।

रामः । अर्थवाद एषः । दोषं तु मे कंचित् कथय येन स प्रतिविधीयेत ।

दुर्मु० । ( सास्रम् ) शृणोतु देवः । ( कर्णे एवमेवम् ) ।

रामः । अहह तीव्रसंवेगो वाग्वज्रः । ( इति मूर्च्छति ) ।

दुर्मु० । आश्वासितु देवः ।

रामः । ( आश्वस्य )

हा हा धिक् परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृतम् ॥ ३ ॥

तत्किमत्र मंदभाग्यः करोमि । ( विमृश्य सकरुणम् ) अथवा किमन्यत् ।

सतां केनापि कार्येण लोकस्याराधनं व्रतम् ।
यत्पूरितं हि तातेन मां च प्राणांश्च मुंचता ॥ ४ ॥

संप्रत्येव भगवता वासिष्ठेन संदिष्टम् । अपि च ।

यत्सावित्रैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।
मत्संबंधात्कश्मला किंवदंती स्याच्चेदस्मिन्हंत धिङ् मामधन्यम् ॥ ५ ॥

हा देवि देवयजनसंभवे । हा स्वजन्मानुग्रहपवित्रीकृतवसुंधरे । हा जनकवंशनंदिनि । हा पावकवसिष्ठारुंधतीप्रशस्तशीलशालिनि । हा रामैकजीविते । हा महारण्यवासप्रियसखि । हा तातप्रिये । हा स्तोकप्रियवादिनि । कथमेवंविधायास्तवायमीदृशः परिणामः ।

त्वया जगंति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवंतस्त्वया लोकास्त्वमनाथा विपत्स्यते ॥ ६ ॥

( दुर्मुखं प्रति ) दुर्मुख । ब्रूहि लक्ष्मणमेष ते नूतनो राजा रामः समाज्ञापयति । ( कर्णे एवमेवम् )

दुर्मु० । कथमिदानीमग्निपरिशुद्धाया गर्भपरिस्फुरितपवित्ररघुकुलसंतानाया देव्या दुर्जनवचनादेवमनार्यमध्यवसितं देवेन ।

रामः । शांतम् । कथं दुर्जनाः पौरजानपदाः ।

इक्ष्वाकुवंशोऽभिमतः प्रजानां जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले प्रत्येतु कस्तद्दूरवृत्तम् ॥ ७ ॥

तद्गच्छ ।

दुर्मु० । हा देवि । ( इति निष्क्रांतः ) ।

रामः । हा कष्टमतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

शैशवात्प्रभृति पोषितां प्रियां सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे सौनिको गृहशकुंतिकामिव ॥ ८ ॥

तत्किमित्यस्पर्शनीयः पातकी देवीं दूषयामि ।

( सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन् )

अपूर्वकर्मचांडालमयि मुग्धे विमुंच माम् ।
श्रितासि चंदनभ्रांत्या दुर्विपाकं विषद्रुमम् ॥ ९ ॥

( उत्थाय ) हंत विपर्यस्तः संप्रति जीवलोकः । अद्य पर्यवसितं जीवितप्रयोजनं रामस्य । शून्यमधुना जीर्णारण्यं जगत् । असारः संसारः । कष्टप्रायं शरीरम् । अशरणोऽस्मि । किं करोमि । का गतिः । क्व गच्छामि ।

अथवा ।

दुःखसंवेदनायैव रामे चैतन्यमर्पितम् ।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः ॥ १० ॥

हा अंब अरुंधति । हा भगवंतौ वसिष्ठविश्वामित्रौ । हा भगवन्पावक । हा देवि भूतधात्रि । हा तात जनक । हा तात । हा मातरः । हा प्रियसख महाराज सुग्रीव । हा सौम्य हनूमन् । हा परमोप-

कारिन् लंकाधिपते बिभीषण । हा सखि त्रिजटे । दूषिताः स्थ परिभूताः स्थ रामहतकेन । अथवा को नामाहमेतेषामाह्वाने ।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यंत इव पाप्मना ॥ ११ ॥

योऽहम्

विश्रंभादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतंकस्फुरितकठोरगर्भगुर्वी
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥ १२ ॥

( सीतायाः पादौ शिरसि कृत्वा ) । देवि देवि अयमपश्चिमस्ते रामस्य शिरसि पादपंकजस्पर्शः । ( इति रोदिति ) ।

( नेपथ्ये ) अब्रह्मण्यम् अब्रह्मण्यम् ।

**रामः** । ज्ञायतां भोः किमेतत् ।

( पुनर्नेपथ्ये )

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥ १३ ॥

**रामः** । आः कथमद्यापि राक्षसत्रासः । तद्यावदस्य दुरात्मनः कुंभीनसीपुत्रस्य समुन्मूलनाय शत्रुघ्नं प्रेषयामि । ( कतिचित्पदानि गत्वा पुनः प्रतिनिवृत्य ) हा देवि कथमेवंविधा गमिष्यासि । भगवति वसुंधरे श्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

जनकानां रघूणां च यत्कृस्नं गोत्रमंगलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ १४ ॥

( इति निष्क्रांतः ) ।

**सीता** । हा सौम्य आर्यपुत्र कुत्रासि । ( सहसोत्थाय ) हा धिक् हा धिक् । दुःस्वप्नरणरणकविप्रलब्धाहमार्यपुत्रमाक्रंदामि । (सर्वतोऽव-

लोक्य ) हा धिक् । हा धिक् । कथमेकाकिनीं मां प्रसुप्तामुज्झित्वा आर्यपुत्रो गतः । तत् किमिदानीमेतत् । भवतु कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कोऽत्र परिजनः ।

( प्रविश्य ) दुर्मुखः । देवि कुमारलक्ष्मणो विज्ञापयति । सज्जो रथः । आरोहतु देवीति ।

**सीता** । इयमहमारोहामि । ( उत्थाय परिक्रम्य ) परिस्फुरतीव मे गर्भभारः । तच्छनैर्गच्छामः ।

**दुर्मु०** । इत इतो देवी ।

**सीता** । नमो नमस्तपोधनानां नमो रघुकुलदेवतानां नमो नम आर्यपुत्रचरणकमलानां नमो नमः सकलगुरुजनानां ।

Uttarara'macharita I.

---

## XVI.

### Description of Alaka.

विद्युत्वंतं ललितवनिताः सेंद्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगंभीरघोषम् ।
अंतस्तोयं मणिमयभुवस्तुंगमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥
हस्ते लीलाकमलमलके बालकुंदानुविद्धं
नीता लोध्रप्रसवरजसा पांडुतामानने श्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमंते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥
यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ।
केकोत्कंठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥ ३ ॥

आनंदोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-
 र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यस्मात्प्रणयकलहाद्विप्रयोगोपपत्ति-
 र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ४ ॥
यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
 ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवंते मधु रतिफलं कल्पवृक्षप्रसूतं
 त्वद्गंभीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ५ ॥
मंदाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मंदाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
 संक्रीडंते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ६ ॥
अक्षय्यांतर्भवननिधयः प्रत्यहं रक्तकंठै-
 रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम् ।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
 बद्धालापा बहिरुपवनं कामिनो निर्विशंति ॥ ७ ॥
वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
 पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
 मेकः सूते सकलमबलामंडन कल्पवृक्षः ॥ ८ ॥

Meghaduta.

— —

## XVII.

### Surpanakha personating Manthara.

शूर्पणखा । आवेशितमंथराशरीरा शूर्पणखाऽहम् । वासिष्ठविश्वामित्रगमनेन सुसमाहितम् । अहो एष परशुरामविजयी क्षत्रियकु-

मारो रामः । ( निर्वर्ण्य ) अहो समग्रसौभाग्यलक्ष्मीपरिग्रहेण लोचनरसायनसौम्यमस्य शरीरनिर्माणम् । इदानीं चिरबालवैधव्यदुःखप्रभ्रंशितसंसारसौख्यस्यापि जनस्य चारित्रधैर्यसुपूरितं पुनरपि हृदयं परिस्फुरति ।

रामः ( प्रणिपत्य ) अयि मंथरे कुशलमंबायाः ।

शूर्प० । सुखं कुशलं च । वत्सलताप्रस्नुतस्तनी मध्यमा ते माता परिष्वज्याज्ञापयति । पुत्रक पुरा प्रतिज्ञातौ द्वौ वरौ महाराजेन ज्ञापयामि । अत्र मे विज्ञप्तिहारको भवत्येष तातस्य कार्यलेखः ।

लक्ष्मणः ( गृहीत्वा वाचयति )

अस्त्वेकेन वरेण वत्सभरतो भोक्ताधिराज्यश्रियः

( स्वगतं । ) कथमेतदार्ये तिष्ठति कनिष्ठस्यार्यस्य भरतस्य राज्यप्रार्थनम् ।

( प्रकाशं । )

यात्वन्येन विहाय कालहरणं रामो वनं दंडकाम् ।

( स्वगतं । ) हा अंब किं कृतं त्वयार्यगमनवरणेन ।

( प्रकाशं । )

तस्यां चीरधरश्चतुर्दश समास्तिष्ठत्वसौ तं पुनः
सीतालक्ष्मणमात्रकात्परिजनादन्यो न चानुव्रजेत् ॥ १ ॥

( स्वगतं । ) हा पापे मातृबंधो ।

सदा भरतशत्रुघ्नलक्ष्मणार्यमुखैः कृताम् ।
अंबेति व्याहृतिं हित्वा किं कृतं पापया त्वया ॥ २ ॥

रामः । अहो प्रसादप्रकर्षः ।

तत्रैव गमनादेशो यत्र पर्युत्सुकं मनः ।
न चैष विरहो जातः स च वत्सो ममानुगः ॥ ३ ॥

लक्ष्मणः । दिष्ट्यानुमोदितोऽहमार्येण ।
रामः । आर्ये मंथरे एष प्रस्थितोऽस्मि ।

Mahaviracharita IV.

---

## XVIII.

### Advice to a king grieved at the death of his beloved queen.

अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमास्थितः ।
अभिषंगजडं विजाज्ञिवानिति शिष्येण किलान्वबोधयत् ॥१॥
असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।
न भवंतमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥२॥
मयि तस्य सुवृत्त वर्तते लघुसंदेशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ॥ ३ ॥
पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥४॥
चरतः किल दुश्चरं तपस्तृणबिंदोः परिशंकितः पुरा ।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुरांगनाम् ॥५॥
स तपःप्रतिबंधमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ ६ ॥
भगवन्परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।
इति चोपनतां क्षितिस्पृशं कृतवानासुरपुष्पदर्शनात् ॥ ७ ॥
क्रथकैशिकवंशसंभवा तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥८॥
तदलं तदपायचिंतया विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलात्रिणः ॥ ९ ॥

उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्तया ।
मनसस्तदुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम् ॥१०॥
रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥११॥
अपशोकमनाः कुटुंबिनीमनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ १२ ॥
मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जंतुर्ननु लाभवानसौ ॥ १३ ॥
अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ १४ ॥
स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ १५ ॥
न पृथग्जनवच्छुचो वशं वशिनामुत्तम गंतुमर्हसि ।
द्रुमसानुमतां किमंतरं यदि वायौ द्वितयेऽपि ते चलाः ॥१६॥
स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् ।
तदलब्धपदं हृदि शोकघने प्रतियातमिवांतिकमस्य गुरोः॥१७॥

Raghuvaṁsa VIII.

---

## XIX.

### An account of Kadambari.

महाश्वेताऽब्रवीत् । महाभाग यत्तन्मया कथितममृतसंभवमप्सरसां कुलं तस्मान्मदिरेति नाम्ना मदिरायतेक्षणा कन्यकाभूत् । तस्याश्चासौ सकलगंधर्वकुलमुकुटकुड्मलपीठप्रतिष्ठितचरणो देवश्चित्ररथः पाणिमग्रहीत् । अपरिमितगुणगुणाकृष्टहृदयश्चान्यवनितादुर्लभेनाधःकृताशेषांतःपुरेण हेमपट्टलांछनेन छत्रचामरचिन्हेन महादेवीशब्देन परं प्रीतः

प्रसादमकरोत् । अन्योन्यप्रेमसंवर्धनपरयोश्च तयोर्यौवनसुखानि सेवमानयोः कालेनाश्चर्यभूतमेकजीवितमिव पित्रोरथवा सर्वस्यैव गंधर्वकुलस्य वा जीवलोकस्य दुहितृरत्नमुदपादि कादंबरीति नाम्ना । सा च मे जन्मतः प्रभृत्येकासनशयनपानाशना परं प्रेमस्थानमखिलविश्रंभधाम द्वितीयमिव हृदयं बालमित्रम् । एकत्र तया मया च नृत्यगीतादिकलासु कृताः परिचयाः । शिशुजनोचिताभिश्च क्रीडाभिरनियंत्रणनिर्भरमपनीतो बालभावः । सा चामुनैव मदीयेन हतवृत्तांतेन समुपजातशोका निश्चयमकार्षीन्नाहं कथंचिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामिति सखीजनस्य पुरतः सशपथमभिहितवती यदि कथमपि मामनिच्छंतीमपि बलात्तातः कदाचित्कस्मैचिद्दातुमिच्छति तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानुत्स्रक्ष्यामीति । सर्वं च तदात्मदुहितुः कृतनिश्चयं निश्चलभाषितं कर्णपरंपरया परिजनसकाशाद्गंधर्वराजश्चित्ररथः स्वयमशृणोत् । गच्छति काले समुपारूढनिर्भरयौवनामालोक्य सुतां बलवदुपतापपरवशः क्षणमपि न धृतिमलभत । एकापत्यतया चातिप्रियतया च न शक्तः किंचिदपि तामभिधातुमित्यपश्यंश्चान्यदुपायांतरमिदमत्र प्राप्तकालमिति मत्वा तया महादेव्या मदिरया सहावधार्य क्षीरोदनामानं कंचुकिनं वत्से महाश्वेते त्वद्व्यतिकरेणैव दग्धहृदयानामिदमपरमस्माकमुपस्थितमिदानीं तु कादंबरीमनुनेतुं त्वं शरणमिति संदिश्य मत्समीपमद्यैव प्रत्यूषसि प्रेषितवान् । ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्धं सा तरलिका सखि कादंबरि किं दुःखितमपि जनमतितरां दुःखयसि जीवंतीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथमिति संदिश्य विसर्जिता । नातिचिरं गतायां च तस्यामनंतरमेवेमां भूमिमनुप्राप्तो महाभाग इत्याभिधाय तूष्णीमामभवत् ।

Kadambari.

---

## XX.

### The duties of a king.

राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ १ ॥
ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ २ ॥
अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ ३ ॥
इंद्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चंद्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ ४ ॥
यस्मादेषां सुरेंद्राणाम् मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ५ ॥
तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ ६ ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेंद्रः प्रभावतः ॥ ७ ॥
बालोऽपि नावमंतव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८ ॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ ९ ॥
कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च सत्त्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥ १० ॥
यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ११ ॥
तं यस्तु द्वेष्टि संमोहात् स विनश्यत्यसंशयम् ।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥ १२ ॥

तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ १३ ॥
तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दंडमसृजत्पूर्वमीश्वरः ॥ १४ ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पंते स्वधर्मान्न चलंति च ॥ १५ ॥
तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ।
तथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥ १६ ॥
स राजा पुरुषो दंडः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रातिभूः स्मृतः ॥ १७ ॥
दंडः शास्ति प्रजाः सर्वा दंड एवाभिरक्षति ।
दंडः सुप्तेषु जागर्ति दंडं धर्मं विदुर्बुधाः ॥१८॥
समीक्ष्य स धृतः सम्यक् सर्वा रंजयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ १९ ॥
यदि न प्रणयेद्राजा दंडं दंड्येष्वतंद्रितः ।
शूले मत्स्यानिवपक्ष्यन् दुर्बलान् बलवत्तराः ॥ २० ॥
अद्यात्काकः पुरोडाशं श्वाऽवलिह्याद्धविस्तथा ।
स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ॥ २१ ॥
सर्वो दंडजितो लोको दुर्लभो हि शुचिर्नरः ।
दंडस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ २२ ॥
देवदानवगंधर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पंते दंडेनैव निपीडिताः ॥ २३ ॥
दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दंडस्य विभ्रमात् ॥ २४ ॥
यत्र श्यामो लोहिताक्षो दंडश्चरति पापहा ।
प्रजास्तत्र न मुह्यंति नेता चेत्साधु पश्यति ॥ २५ ॥

तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥ २६ ॥
तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्धते ।
कामात्मा विषमः क्षुद्रो दंडेनैव निहन्यते ॥ २७ ॥
दंडो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हंति नृपमेव सबांधवम् ॥ २८ ॥

Manu VII.

---

## XXI

### The rainy season.

तृषाकुलैश्चातकपक्षिणां कुलैः प्रयाचितास्तोयभरावलंबिनः ।
प्रयांति मंदं नववारिवर्षिणो बलाहकाः श्रोत्रमनोहरस्वनाः ॥ १ ॥
बलाहकाश्चाशनिशब्दभूषणाः सुरेंद्रचापं दधतस्तडिद्गुणम् ।
सुतीक्ष्णधारापतनोग्रसायकास्तुदंति चेतो ध्वनिभिः प्रवासिनाम् ॥२॥
प्रभिन्नवैदूर्यनिभैस्तृणांकुरैः समाचिता प्रोत्थितकंदलीदलैः ।
विभाति शुक्लेतररत्नभूषिता वरांगनेव क्षितिरिंद्रगोपकैः ॥ ३ ॥
विपाटयंत्यः परितस्तटद्रुमान् प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः प्रकामा इव जातविभ्रमाः प्रयांति नद्यस्त्वरितं पयोनिधिम् ।४।
तृणोद्गमैरुद्गतकोमलांकुरैश्चितानि नीलैर्हरिणीमुखक्षतैः ।
वनानि रम्याणि हरंति मानसं विभूषितान्युद्गतपल्लवद्रुमैः ॥ ५ ॥
विपांडुरं कीटरजस्तृणान्वितं भुजंगवद्वक्रगति प्रसर्पितम् ।
ससाध्वसैर्भेककुलैर्विलोकितं प्रयाति निम्नाभिमुखं नवोदकम् ॥ ६ ॥
प्रफुल्लपालां नलिनीं समुत्सुका विहाय भृंगाः श्रुतिहारिनिस्वनाः ।
पतंति मूढाः शिखिनां प्रनृत्यतां कलापचक्रेषु नवोत्पलाशया ॥ ७ ॥
वनद्विपानां नवतोयदस्वनैर्मदान्वितानां स्वनतां मुहुर्मुहुः ।
कपोलदेशा विमलोत्पलप्रभाः सभृंगयूथैर्मदवारिभिः श्रिताः ॥ ८ ॥

सतोयनम्रांबुदचुंबितोपलाः समाचिताः प्रस्रवणैः समंततः ।
प्रवृत्तनृत्यैः शिखिभिः समाकुलाः समुत्सुकत्वं जनयंति भूधराः ॥९॥
कदंबसर्जार्जुननीपकेतकीर्विकंपयंस्तत्कुसुमाधिवासितः ।
सशीकरांभोधरसंघशीतलः समीरणः कं न करोति सोत्सुकम् ॥१०॥

मुदित इव कदंबैर्जातपुष्पैः समंतात्
पवनचपलशाखैः शाखिभिर्नृत्यतीव ।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकाच्छांततापो वनांतः ॥ ११ ॥
बहुगुणरमणीयो योषितां चित्तहारी
तरुविटपलतानां बांधवो निर्विकारः ।
जलदसमय एष प्राणिनां प्राणहेतु-
र्दिशतु तव हितानि प्रायशो वांच्छितानि ॥१२

R̥tusambhara II.

---

## XXII.

### A battle scene.

( ततः प्रविशति सप्रहारः पुरुषः ) ।

**पुरुषः** । आर्याः अपि नाम अस्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधनो न वेति । कथं न कोऽपि मंत्रयते । भवतु बद्धपरिकराणां पुरुषाणां समूहो दृश्यते । तत्र गत्वा प्रक्ष्यामि । कथमेते खलु स्वस्वामिनो गाढप्रहारस्य घनसन्नाहजालदुर्भेद्यमुखैः कंकपत्रैर्हृदयाच्छल्यान्युद्धरंति । तत् खल्वेते न जानंति । भवतु । अन्यतो विचेष्यामि । ( अन्यतो विचित्य ) । इमे खलु अपरे प्रभूततराः संकालिता वीरमानुषाः । तदत्र गत्वा प्रक्ष्यामि । ( उपगम्य ) । हंहो जानीथ

कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । कथमेतेऽपि मां दृष्ट्वा अधिकतरं रुदंति । तन्नैतेऽपि जानंति । हा दुष्करं खल्वत्र वर्तते । एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया वध्वा सह अनुम्रियते । ( सश्लाघम् ) । साधु वीरमातः साधु । अन्यस्मिन्नपि जन्मांतरे अनिहतपुत्रका भविष्यासि । भवतु । अन्यतो विचेष्यामि । ( अन्यतो विलोक्य ) अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणप्रतीकार एव योधसमूह इमं शून्यासनं तुरंगममुपालभ्य रोदिति । नूनमेषामत्रैव स्वामी व्यापादितः । तन्न त्वेतेऽपि जानंति । भवतु । अन्यतो गत्वा प्रक्ष्यामि । ( सर्वतो विलोक्य ) । कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन् भागधेयविमुखतया पर्याकुलो जनः । तत् कमत्र प्रक्ष्यामि कं वा उपालप्स्ये । भवतु स्वयमेवात्र विचेष्यामि । ( परिक्रम्य ) । दैवमिदानीमुपालप्स्ये । अहो दैवम् । एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गांगेयजयद्रथद्रोणांगराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथिवीमंडलैकनाथो महाराजदुर्योधनोऽप्यन्विष्यते । न जाने कस्मिन्नुदेशे स वर्तत इति । ( विचिंत्य निःश्वस्य च ) । अथवा किमत्र दैवमुपालभे । तस्य खल्विदं निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामहहितोपदेशांकुरस्य शकुनिहतकप्रोत्साहनादिविरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभूतचिरकालसंबद्धवैरालवालस्य पांचालिकाकेशग्रहणकुसुमस्य फलं परिणमति । ( अन्यतो विलोक्य ) । यथा अत्रैष लूनकेतुवंशो रथो दृश्यते तदहं तर्कयाम्यवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । ( उपसृत्य दृष्ट्वा च ) । जयतु जयतु महाराजः ।

**सूत** ः । विलोक्य । आयुष्मन् समरात् सुंदरकः प्राप्तः ।

**दुर्यो०** । विलोक्य । अये सुंदरक कच्चित्कुशलममंगराजस्य ।

**सुंद०** । देव कुशलं शरीरमात्रेण ।

दुर्यो० । ( ससंभ्रमम् ) सुंदरक किं किरीटिनाऽस्य निहता धौरेयका हतः सारथिर्भग्नो वा रथः ।

सुंद० । न रथो भग्नः । अस्य मनोरथोऽपि ।

दुर्यो० । ( सरोषम् ) । किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि । तदशेषतो विस्पष्टं कथ्यताम् ।

सुंद० । यद्देव आज्ञापयति । अये देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना । ( इति साटोपं परिक्रम्य ) । शृणोतु देवः । अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनांगराजेन कुटिलभ्रुकुटीभंगभीषणललाटपट्टेनाविज्ञातसंधानमोक्षेण शिलीमुखसंघातवर्षिणा अभियुक्तः स दुराचारो मध्यमपांडवो भीमसेनहतकः । ततो विस्तीर्यमाणेनांधकारेण अंधीकृतमुभयबलं न भुवनतलं लक्ष्यते । ततो दूराकृष्टधनुर्गुणस्फोटनटंकारगंभीरभीषणेनांधकारेण ज्ञायते गर्जितं प्रलयजलधरेणेति । ततो द्वयोस्तयोरन्योन्यसिंहनादगर्जितपिशुनं संभूतं समरदुर्दिनम् । एतस्मिन्नंतरे ज्येष्ठस्य भ्रातुः पराभवशंकिना धनंजयेन धावितस्तमुद्देशं रथवरः । ततो भीमसेनधनंजयाभ्यामभिमुक्तं पितरं प्रेक्ष्य ससंभ्रमं विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदंडज्यो दक्षिणहस्तविक्षिप्तपुंखबंधनो देशमुपगतः कुमारो वृषसेनः । तेनागच्छतैव कुमारवृषसेनेन कुसुमित इव तरुर्मुहूर्तेन शिलीमुखैः प्रच्छादितो धनंजयस्य रथवरः । ततो धनंजयेन ईषद्विहस्य भणितम् । अरे रे वृषसेन पितुरपि तावत्ते न युक्तं ममाभिमुखं स्थातुं किं पुनर्भवतो बालस्य । तद्गच्छापरैः कुमारैरायुध्यस्व । एतां वाचं निशम्य गुरुजनाधिक्षेपोद्दीपितकोपोपरक्तमुखमंडलविजृंभितभ्रुकुटीभंगभीषणेन चापधारिणा कुमारवृषसेनेनापि मर्मभेदकैः परुषविषमैः श्रुतिपथकृतप्रणयैर्निर्भर्त्सितो गांडीवी बाणैर्न पुनर्दुष्टवचनैः । ततश्च निशितशराभिघातवेदनोपजातमन्युना गांडीविना चंडगांडीवज्याशब्दनिर्जितवज्रनिर्घात-

घोषेण बाणानिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् । तत्प्रेक्ष्य तस्य शत्रोः समरव्यापारचतुरत्वं कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म । ततः कुरुराजपांडवबलेषु साधु वृषसेन साधु इति कलकलमुखरो वीरलोक आलोकयितुं प्रवृत्तः । ततश्चावधीरितसकलधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारंभेण हर्षरोषकरुणाशंकासंकटेऽनुवर्तमानस्य स्वामिनोऽगराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पाकुला दृष्टिः कुमारवृषसेने । उभयबलप्रवृत्तसाधुकारामर्षितेन शरवर्षप्रज्वालितेन गांडीविना तुरगेषु सारथावपि रथवरे धनुष्यपि ज्यायामपि नरेंद्रलांछने सितातपत्रे व्यापारिताः समं शिलीमुखाः । ततश्च विरथो लूनगुणकोदंडः परिभ्रमणव्यापारमात्रप्रतिषिद्धशरसंपतो मंडलानि विरचयितुं प्रवृत्तः कुमारः । अथ सुतरथविध्वंसनामर्षोद्दीपितेन स्वामिना अंगराजेनागणितभीमसेनाभियोगेन पर्यस्तो धनंजयस्योपरि शिलीमुखासारः। कुमारवृषसेनोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयाभियोगे । भणितं च कुमारेण । रे रे ताताधिक्षेपमुखर मध्यमपांडव मम शरास्तव शरीरमुज्झित्वा अन्यस्मिन् न निपतंतीत्युक्त्वा शरसहस्रैः पांडवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः ।

दुर्यो० । ( सविस्मयम् ) । अहो बालस्य पराक्रमो मुग्धस्वभावस्यापि । ततस्ततः ।

सुंद० । ततश्च तस्य शरसहस्रपातमवधूय किरीटिना गृहीता रथोत्संगात् क्वणत्कनककिंकिणीजालझंकारविराविणी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिः सोपहासं विमुक्ता च धनंजयेन कुमाराभिमुखम् । ततः प्रज्वलंतीं शक्तिं प्रेक्ष्य विगलितमंगराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद् बाष्पसलिलं वदनाद्गसितं हसितं च धनंजयेन सिंहनादो विनादितो वृकोदरेण दुष्करं दुष्कर-

मित्याक्रंदितं कुरुबलेन । ततश्च कुमारवृषसेनेन कर्णाकृष्टनिशितक्षुरप्रेण सुचिरं निधार्य अर्धपथे भागीरथीव भगवता विषमलोचनेन त्रिधा कृता शक्तिः । एतस्मिन्नंतरे कृतकलकलमुखरेण वीरलोकसाधुवादेनांतरितः समरतूर्यरवः सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समरांगणम् ।

दुर्यो० । अहो बालस्य पराक्रमः । ततस्ततः ।

सुंद० । ततश्च भणितं स्वामिना अंगराजेन । भो वृकोदर असमाप्तस्तव ममापि समरव्यापारः । तदनुमन्यतां भवान् मां मुहूर्तं प्रेक्षावहे तावत्क्षणमात्रं वत्सस्य तव भ्रातुर्धनुर्वेदशिक्षानिपुणत्वं तवाप्येतत्प्रेक्षणीयमिति । ततो विरतौ रणव्यापारनिर्बंधान्मुहूर्तं प्रशमितवैरौ जातौ द्वौ च प्रेक्षकौ भीमसेनांगराजौ । ततश्च एतस्मिन्नंतरे शक्तिखंडामर्षितेन गांडीविना एवं भणितम् । अरे रे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः । अरे अविनयनदीकर्णधार कर्ण युष्माभिर्मम परोक्ष एकाकी पुत्रकोऽभिमन्युर्व्यापादितोऽहं पुनर्युष्माकं प्रेक्षमाणानामेनं कुमारवृषसेनं स्मर्तव्यशेषं करोमीति भणित्वा सगर्वमास्फालितमनेन निर्घातघोषभीषणज्यारवं गांडीवं स्वामिनापि सज्जीकृतं कालपृष्ठम् । एतस्मिन्नंतरे प्रतिषिद्धभीमसेनसमरकर्मारभेण गांडीविना विरचिते अंगराजवृषसेनरथकूलंकषे द्वे बाणनद्यौ । ताभ्यामपि द्वाभ्यामन्योन्यस्नेहदर्शितशिक्षाविशेषाभ्यामभियुक्तो मध्यमपांडवः । ततो गांडीविना तारस्सितज्यानिर्घोषमात्रविज्ञातबाणवर्षेण तथाचरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न बलानि न सारथिर्न तुरंगमो वीरलोकश्च संलक्ष्यते । ततश्च क्षणमात्रमेवातिक्रांते शरसंपाते सहर्षसिंहनादे पांडवसैन्ये सविषादविमुक्ताक्रंदे कौरवबले समुत्थितो महान्कलकलो हा हतः कुमारवृषसेन इति । ततश्च कुमारं हतसारथितुरंगं लूनातपत्रचापचामरकेतुवंशं स्वर्ग-

प्रभ्रष्टमिव सुरकुमारं हृदयमर्मभेदिना एकेन शिलीमुखेन भिन्नदेहं रथामध्ये पर्यस्तं प्रेक्ष्य अहमागतः ।

Venisamhara. IV.

---

## XXIII.

An address to the Supreme Being.

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ १ ॥
ते च प्रापुरुदन्वंतं बबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यंत्या कार्यसिद्धेर्हि लक्षणम् ॥ २ ॥
भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामंडलोदर्चिर्मणिद्योतितविग्रहम् ॥ ३ ॥
श्रियः पद्मानिषण्णायाः क्षौमांतरितमेखले ।
अंके निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ४ ॥
प्रबुद्धपुंडरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारंभसुखदर्शनम् ॥ ५ ॥
प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ ६ ॥
मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्रांजलिना विनीतेन गरुत्मना ॥ ७ ॥
योगनिद्रांतविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णंतं सौखशायनिकानृषीन् ॥ ८ ॥
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवः स्तुत्यमवाङ्मनसगोचरम् ॥ ९ ॥
नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥ १० ॥

रसांतराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ ११ ॥
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यंतमव्यक्तो व्यक्तकारणम् ॥ १२ ॥
हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १३ ॥
सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ १४ ॥
सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ १५ ॥
चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ १६ ॥
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वंति योगिनस्त्वां विमुक्तये ॥ १७ ॥
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ १८ ॥
शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ १९ ॥
बहुधाप्यागमैर्भिन्नाः पंथानः सिद्धिहेतवः ।
त्वय्येव निपतंत्योघा जान्हवीया इवार्णवे ॥ २० ॥
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये ॥ २१ ॥
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २२ ॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः ।

अनेन वृत्तयः शेषा विनोदितफलास्त्वयि ॥ २३ ॥
उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यंते दूराणि चरितानि ते ॥ २४ ॥
अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ २५ ॥
महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ २६ ॥
इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ २७ ॥

Raghuvamsa X.

---

## XXIV.

An old minister's advice to a young prince.

अथ सोऽप्याचचक्षे । देव मयापि परिभ्रमता विंध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः कश्चित्कूपाभ्यासेऽष्टवर्षदेशीयो दृष्टः । स च श्वासगद्गदमगदत् । महाभाग क्लिष्टस्य मे क्रियतामार्य साहाय्यकम् । अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदंचन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः। तमलमस्मि नाहमुद्धर्तुमिति । अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य तं च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पंचषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णस्तं जरंतमब्रवम् । तात क एष बालः को वा भवान्कथं चेयमापदापन्नेति । सोऽश्रुगद्गदमगदत् । श्रूयतां महाभाग । विदर्भो नाम जनपदः । तस्मिन्भोजवंशभूषणमवतार इव धर्मस्यातिसत्त्वः सत्यवादी वदान्यो विनीतो विनेता प्रजानां रंजितभृत्यः कीर्तिमानुदग्रो बुद्धिमूर्तिभ्यामुत्थानशीलः शास्त्रप्रमाणकः शक्यभव्यकल्पारंभी संभावयिता बुधान्प्रभावयिता

सेवकानुद्भावयिता बंधूनभ्यभावयिता शत्रूनसंबद्धप्रलापेष्वदत्तकर्णः कदाचिदप्यतृष्णो गुणेष्वतिनदीष्णः कलासु नेदिष्ठो धर्मार्थसंहितासु स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता प्रत्यवेक्षिता कोशवाहनयोर्यत्नेन परीक्षिता सर्वाध्यक्षाणामुत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः सद्यः प्रतिकर्ता दैवमानुषीणामापदां षाड्गुण्योपयोगनिपुणो मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य पुण्यश्लोकः पुण्यवर्मा नामासीत्। स पुण्यैः कर्मभिः प्राप्य पुरुषायुषं पुनरपुण्येन प्रजाजनानामगण्यताममरेषु।तदनंतरमनंतवर्मा नाम तद् यातिरवविमध्यातिष्ठत्। स सर्वगुणैः समृद्धोऽपि दैवाद्दंडनीत्यां नात्याद्दतोभूत्। तमेकदा रहसि वसुरक्षितो नाम मंत्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत। तात सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवा-त्रभवति लक्ष्यते। बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा तवेतरेभ्यः प्रतिविशिष्यते। तथाप्य-सावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेष्वनाग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम्। अयथावृ-त्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रांतशासनाश्च प्रजा यत्किं-चनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः। निर्मर्या-दश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते। आगम-दीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभ-वद्भाविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति। तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरंध एव जंतुरर्थदर्शनेष्वसा-मर्थ्यात्। अतो विहाय बाह्यविद्यास्वभिषंगमागमय दंडनीतिं कुल-विद्याम्। तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीमिति।

Dashakumaracharita

## XXV.

### Bhima's address to Yudhishthira.

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥
यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ २ ॥
विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥
परिणामसुखे गरीयसि व्यथकेऽस्मिन्वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥ ४ ॥
इयमिष्टगुणाय रोचतां रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ॥ ५ ॥
चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्ययं करिणी पंकमिवावसीदति ॥ ६ ॥
विधुरं किमतः परं परैरवगीतां गमिते दशामिमाम् ।
अवसीदति यत्सुरैरपि त्वयि संभावितवृत्ति पौरुषम् ॥ ७ ॥
द्विषतामुदयः सुमेधसा गुरुरस्वंततरः सुमर्षणः ।
न महानपि भूतिमिच्छता फलसंपत्प्रवणः परिक्षयः ॥ ८ ॥
अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ९ ॥
अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया ।
अपयांत्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ १० ॥
क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमंत्यनपायमुत्थितं प्रतिपच्चंद्रमिव प्रजा नृपम् ॥ ११ ॥
प्रभवः खलु कोषदंडयोः कृतपंचांगविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ १२ ॥

अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं मतमालंबनमात्मपौरुषम् ॥ १३ ॥
विपदोऽभिभवंत्यविक्रमं रहयत्यापदुपेतमायातिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ १४ ॥
तदलं प्रतिपक्षमुन्नतेरवलंब्य व्यवसायवंध्यताम् ।
निवसंति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥ १५ ॥
अथ चेदवधिः प्रतीक्ष्यते कथमाविष्कृताजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेंद्रसंपदः ॥ १६ ॥
द्विषतां विहितं त्वयाथवा यदि लब्धा पुनरात्मनः पदम् ।
जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥ १७ ॥
मदासिक्तमुखैर्मृगाधिपः कारभिर्वर्तयते स्वयं हतैः ।
लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥१८॥
अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचंचला ननु लक्ष्मीः फलमानुषंगिकम् ॥१९॥
ज्वलितं न हिरण्यरेतसं चयमास्कंदति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झंति न धाम मानिनः ॥२०॥
किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥२१॥
कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २२ ॥
द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः ॥ २३ ॥
ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरां रिपुनारीनयनांबुसंततिः ॥ २४ ॥

Kiratarjuniyam II.

## XXVI.

### Chanakya's soliloquy.

**चाणक्यः** । कथय क एष मयि स्थिते चंद्रगुप्तमभिभवितुमिच्छति ।

आस्वादितद्विरदशोणितशोणशोभां
संध्यारुणामिव कलां शशलांछनस्य ।
जृंभाविदारितमुखस्य मुखात्स्फुरंतीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥ १ ॥

( शिष्योपनीत आसन उपविश्य नाट्येनात्मगतम् ) । कथं प्रकाशतां गतोयमर्थः पौरेषु यथा किल नंदकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनंदराज्यपरिपणनप्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह संधाय तदुपगृहीतेन च महता म्लेच्छराजबलेन परिवृतो वृषलमभियोक्तुमुद्यत इति । ( विचिंत्य ) अथवा येन मया सर्वलोयप्रकाश नंदवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्सोहमिदानीं प्रकाशीभवंतमप्येनमर्थं न समर्थः किं प्रशमयितुम् । सोऽहमिदानीमवसितप्रतिज्ञाभारोऽपि वृषलापेक्षया शस्त्रं धारयामि । येन मया भुवो हृदयरोगा इव नव नंदाः समुत्खाताः सरसि कमलिनीव च मौर्ये लक्ष्मीः स्थिरपदा कृता । अथवा अगृहीते राक्षसे किमुत्खातं नंदवंशस्य किं वा स्थैर्यमुत्पादितं चंद्रगुप्तलक्ष्म्याः । अहो राक्षसस्य नंदवंशे निरतिशयो भक्तिगुणः । स खलु कस्मिंश्चिदपि जीवति नंदान्वयावयवे वृषलस्य साचिव्यं ग्राहयितुं न शक्यते । ( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ) । साधु अमात्य राक्षस साधु । साधु श्रोत्रिय साधु । साधु मंत्रिबृहस्पते साधु । कुतः

ऐश्वर्यादनपेतमीश्वरमयं लोकोर्थतः सेवते
तं गच्छंत्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया ।

भर्तुर्ये प्रलयेपि पूर्वसुकृतासंगेन निःसंगया
भक्त्या कार्यधुरं वहंति बहवस्ते दुर्लभास्त्वादृशाः॥ २ ॥

अत एवास्माकं त्वत्संग्रहे यत्नः कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति । तन्मयाप्यस्मिन्वस्तुनि न शयानेन स्थीयते । यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः । कथमिव । अत्र तावद्वृषल-पर्वतकयोरन्यतरविनाशेनापि चाणक्यस्यापकृतं भवतीति विषकन्यया राक्षसेनास्माकमत्यंतोपकारि मित्रं घातितस्तपस्वी पर्वतक इति संचारितो जगति जनापवादः । लोकप्रत्ययार्थमस्यैवार्थस्याभिव्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः । शक्यः खल्वेष राक्षसमतिपरिगृहीतोपि व्युत्तिष्ठमानः प्रज्ञया निग्रहीतुम् । न पुनरस्य निग्रहात्पर्वतकवधोत्पन्नं राक्षसस्यायशः प्रकाशीभवत्प्रमार्ष्टुमिच्छामि । प्रयुक्ताश्च स्वपक्षपरपक्ष-योरनुरक्तापरक्तजनजिज्ञासया बहुविधदेशवेषभाषाचारसंचारवेदिनो नानाव्यंजनाः प्रणिधयः । अन्विष्यते च कुसुमपुरवासिनां नंदामात्य-सुहृदां निपुणं प्रचारगतम् । तत्तत्कारणमुत्पाद्य कृतकृत्यतामापादिता-श्चंद्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः । शत्रुप्रयुक्तानां च तीक्ष्णरसदायिनां प्रतिविधानं प्रत्यप्रमादितः परीक्षितभक्तयः क्षितिप-तिप्रत्यासन्नाः नियोजितास्तत्राप्तपुरुषाः। अस्ति चास्माकं सहाध्यायि मित्रमिंदुशर्मा नाम ब्राह्मणः । स चौशनस्यां दंडनीत्यां चतुःषष्ट्यंगे ज्योतिःशास्त्रे च परं प्रावीण्यमुपगतः । स मया क्षपणकलिंगधारी नंदवंशवधप्रतिज्ञानंतरमेव कुसुमपुरमुपनीय सर्वनंदामात्यैः सह सख्यं ग्राहितो विशेषतश्च तस्मिन्राक्षसः समुत्पन्नविश्रंभः । तेनेदानीं मह-त्प्रयोजनमनुष्ठेयं भविष्यति । तदेवमस्मत्तो न किंचित् परिहास्यते । वृषल एव केवलं प्रधानप्रकृतिष्वस्मास्वारोपितराज्यतंत्रभारः सततमुदास्ते।अथ वा यत्स्वयमभियोगदुःखैरसाधारणैरपाकृतं तदेव राज्यं सुखयति।कुतः ।

स्वयमाहृत्य भुंजाना बलिनोऽपि स्वभावतः ।
गजेंद्राश्च नरेंद्राश्च प्रायः सीदंति दुःखिताः ॥ ३ ॥

Mudrarakshasa I.

---

## XXVII.

Some rules of royal policy.

षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रंथानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ १ ॥
अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २ ॥
मंत्रो योध इवाधीरः सर्वांगैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशंकया ॥ ३ ॥
आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतीयते ॥ ४ ॥
तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।
पूर्णश्चंद्रोदयाकांक्षी दृष्टांतोऽत्र महार्णवः ॥ ५ ॥
संपदा सुस्थिरंमन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ६ ॥
समूलघातमघ्नंतः परान्नोद्यंति मानिनः ।
प्रध्वंसितांधतमसस्तत्रोदाहरणं रविः ॥ ७ ॥
विपक्षमखलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पंकतां धूलिमुदकं नावतिष्ठते ॥ ८ ॥
ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।
पुरः क्लिश्नाती सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ९ ॥
सखा गरीयान्शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्यातामभित्रौ मित्रे च सहजप्राकृतावपि ॥ १० ॥

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ११ ॥
त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ १२ ॥
आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् ।
कथापि खलु पापानामलमश्रेयसे यतः ॥ १३ ॥
विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ १४ ॥
मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ १५ ॥
पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ १६ ॥
तुंगत्वमितरा नाद्रौ नेदं सिंधावगाधता ।
अलंघनीयताहेतुरुभयं तन्मनस्विनि ॥ १७ ॥
तुल्येऽपराधे स्वर्भानुर्भानुमंतं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ १८ ॥
स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि ।
निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥ १९ ॥
तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।
पंचमः पंचतपसस्तपनो जातवेदसाम् ॥ २० ॥
अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ।
कथंकारमनालंबा कीर्तिर्द्यामधिरोहति ॥ २१ ॥
अंकाधिरोपितमृगश्चंद्रमा मृगलांछनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ २२ ॥
चतुर्थोपायसाध्ये तु रिपौ सांत्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिंचति ॥ २३ ॥

सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिंदवः ॥ २४ ॥
यजतां पांडवः स्वर्गमवत्विंद्रस्तपस्विनः ।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥ २५ ॥

Sisupalavadha II.

---

## XXVIII.

### Sarasvati cursed by Durvasas.

पुरा किल भगवान् स्वं लोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः शुनासीरप्रमुखैर्गीर्वाणैः परिवृतो ब्रह्मोदिताः कथाः कुर्वन्नन्याश्च निरवद्या विद्यागोष्ठीर्विभावयन् कदाचिदासांचक्रे । तथासीनं च तं त्रिभुवनप्रतीक्ष्यं सर्वे दक्षचाक्षुषप्रभृतयः सप्रजापतयः सर्वे च सप्तर्षिपुरःसरमहामुनयः सिषेविरे । विद्याविसंवादकृताश्च तत्र तेषामन्योन्यस्य विवादाः प्रादुरभूवन् । अथातिरोषणः प्रकृत्या महातपा मुनिरत्रेस्तनयस्तारापतेर्भ्राता नाम्ना द्वितीयेन मंदुनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधांधो विस्वरमकरोत् । सर्वेषु शापभयप्रतिपन्नमौनेषु मुनिषु देवी सरस्वती तत् श्रुत्वा जहास । दृष्ट्वा तु तां तथा हसंतीं स मुनिराः पापे दुर्गृहीतविद्यालवावलेपे दुर्विदग्धे मामप्यपहससीत्युक्त्वा कोपतरलितांगुलिना करेणाक्षमालां विक्षिप्य कामंडलवेन वारिणा समुपस्पृश्य शापजलं जग्राह ।

अत्रांतरे स्वयंभुवोऽभ्यासे समुपविष्टा देवी सावित्री आः पाप क्रोधोपहत दुरात्मन्ननात्मज्ञ ब्रह्मबंधो मुनिखेटक कथमात्मस्खलितविलक्षः सकलसुरासुरमुनिमनुजवंदनीयां त्रिभुवनमातरं सरस्वतीं शप्तुमभिलषसीत्युक्त्वा वृसीमपहाय समुत्तस्थे । मर्षय मर्षय भगवन्नभूमिरेषा शापस्येत्यनुशास्यमानोऽपि तापसैरुपाध्याय स्खलितमेकं क्षम-

स्वेति बद्धांजलिपुटैः प्रसाद्यमानोऽपि शिष्यैः पुत्र मा कृथास्तपसः प्रत्यूहमिति निवार्यमाणोऽप्यत्रिणा रोषावेशविवशो दुर्वासा दुर्विनीते व्यपनयामि ते विद्यालवावलेपविशेषजनितामुन्नतिमधस्ताद्गच्छ मर्त्यलोकमित्युक्त्वा तच्छापोदकं विससर्ज। ततः प्रतिशापदानोद्यतां च सावित्रीं सखि संहर क्रोधं संस्तुतमतयोऽपि जात्यैव द्विजन्मानो माननीया इत्यभिदधाना सरस्वत्येना न्यवारयत्। अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहः सधीरमुवाच। ब्रह्मन्न खलु साधुसेवितोऽयं पंथा येनासि प्रवृत्तः। पुरस्तादुद्दामप्रसृतेंद्रियवाजिसमुत्थापितं रजः कलुषयति दृष्टिमनक्षजिताम्। कियद्दूरं वा चक्षुरीक्षते। विशुद्धया धिया पश्यंति कृतबुद्धयः सर्वानसतः सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिव एकत्र धर्मक्रोधयोर्वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि। क्षमा हि मूलं सर्वतपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता न ते बुद्धिरात्मनो दोषान्पश्यति। क्व महातपोभारवैषयिकता क्व पुरोभागित्वम्। अतिरोषणश्चक्षुष्मानपि अंध एवाजनि। न हि खलु कोपकलुषिता विमृशति मतिः कर्तव्यमकर्तव्यं वा। कुपितस्य हि प्रथमांधकारिणी भवति विद्या ततो भ्रुकुटी। आदाविंद्रियाणि रागः समास्कंदति चरमं चक्षुः। आरंभे तपो गलति पश्चात् स्वेदसलिलम्। पूर्वमयशः स्फुरति अनंतरमधरः। कथं च ते विषपादपस्येव लोकविनाशाय वल्कलानि जातानि। अनुचिता खल्वस्य मुनिवेषस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः। शैलूष इव वृथा वहसि कृत्रिमोपशमम्। अनेनापि लघिम्ना चाद्याम्युपर्येव प्लवसे ज्ञानोदन्वतः। न खल्वेडमूकाक्षा एडा जडा वा एते महर्षयः। रोषदोषनिषेव्ये स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्। एतानि तान्यात्मस्खालितवैलक्ष्याणि यैर्याति वाच्यतामविदग्धो जनः। इत्युक्त्वा पुनराह। भद्रे सरस्वति मा गा विषादम्। एषा त्वामनुयास्यति

सावित्री । विनोदयिष्यति चास्मद्विरहितां त्वाम् । आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यतीत्यभिधाय विसर्जितसुरासुरमुनिमंडलः समुचिताह्निककरणायोदतिष्ठत् । सरस्वत्यपि शप्ता किंचिदधोमुखी सह सावित्र्या गृहमगात् ।

Harshacharita.

---

## XXIX

Miscellaneous verses.

वेदांतेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अंतर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ १ ॥
अर्थातुराणां न गुरुर्न बंधुः कामातुराणां न भयं न लज्जा ।
विद्यातुराणां न सुखं न निद्रा क्षुधातुराणां न रुचिर्न वेला ॥ २ ॥
कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते
न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता ॥ ३ ॥
निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशतां वांछति ।
चक्रेशः पुनरिंद्रतां सुरपतिर्ब्राह्मं पदं वांछति
ब्रह्मा शैवपदं शिवो हरिपदमाशावधिं को गतः ॥ ४ ॥
यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ ५ ॥
यांति न्यायप्रवृत्तस्य तिर्यंचोऽपि सहायताम्
अपंथानं तु गच्छंतं सोदरोऽपि विमुंचति ॥ ६ ॥

स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी ।
विधुरपि विधियोगाद् ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ ७ ॥
अहमेव गुरुः सुदारुणानामिति हालाहल मास्म तात दृप्यः ।
ननु संति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ८
गुणालयोप्यसन्मंत्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ९ ॥
उदयति यदि भानुः पश्चिमे दिग्विभागे
विकसति यदि पद्मं पर्वतानां शिखाग्रे ।
प्रचलति यदि मेरुः शीततां याति वह्नि-
र्न चलति खलु वाक्यं सज्जनानां कदाचित् ॥ १० ॥
उपेक्षितः क्षीणबलोपि शत्रुः प्रमाददोषात्पुरुषैर्मदांधैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति। ११।
गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पंडितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १२ ॥
वृक्षं क्षीणफलं त्यजंति विहगाः शुष्कं सरः सारसाः
पुष्पं पर्युषितं त्यजंति मधुपा दग्धं वनांतं मृगाः ।
निर्द्रव्यं पुरुषं त्यजंति गणिका भ्रष्टश्रियं मंत्रिणः
सर्वः कार्यवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः ॥१३
सदादानः परिक्षीणः शस्त एव करीश्वरः ।
अदानः पीनगात्रोऽपि निंद्य एव हि गर्दभः ॥ १४ ॥
मदोन्मत्तस्य भूपस्य कुंजरस्य च गच्छतः ।
उन्मार्गं वाच्यतां यांति महामात्राः समीपगाः ॥ १५ ॥

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा
 ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पांतेष्वपि न प्रयाति निधनं विद्याख्यमंतर्धनं
 येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥१६
हे राजानस्त्यजत सु॰ विप्रेमबंधे विरोधं
 शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात् ।
तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं
 क्रुद्धैर्नीतास्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ १७ ॥
वार्ता च कौतुकवती विमला च विद्या
 लोकोत्तरः परिमलश्च कुरंगनाभेः ।
तैलस्य बिंदुरिव वारिणि दुर्निवार-
 मेतत्त्रयं प्रसरति स्वयमेव लोके ॥ १८ ॥
पत्रं नैव यदा करीरविटपे दोषो वसंतस्य किं
 नोलूकोप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतंति चातकमुखे मेघस्य किं दूषणम्
 यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥१९॥
को न याति वशं लोके मुखे पिंडेन पूरितः ।
मृदंगो मुखलेपेन करोति मधुरध्वनिम् ॥ २० ॥
वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
 न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरंगायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्यांगेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ २१ ॥
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ।
रविरपि न दहति तादृग्यादृग्दहति वालुकानिकरः ॥२२ ॥
क्वचिद्वीणावाद्यं क्वचिदपि च हाहेति रुदितं
 क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।

क्वचिद्रामा रम्या क्वचिदपि जराजर्जरतनु-
र्न जाने संसारः किममृतमयः किं विषमयः ॥ २३ ॥
कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वापि गोरोमतः
पंकात्तामरसं शशांक उदधोरिंदीवरं गोमयात् ।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छंति किं जन्मना॥२४
बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः
अबोधोपहताश्चान्ये जीर्णमंगे सुभाषितम् ॥ २५ ॥
तृणानि नोन्मूलयति प्रभंजनो मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं महान्महत्स्वेव करोति विक्रमम् ॥२६॥
गुणायंते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायंते किमिति जगतां विस्मयपदम् ।
यथा जीमूतोयं लवणजलधेर्वारि मधुरं
फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ॥ २७ ॥
दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुंचति चेतनाम् ।
ज्वलयति तनूमंतर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृंतति जीवितम् ॥ २८ ॥
यस्मिन्कुले यः पुरुषः प्रधानः स सर्वयत्नैः परिरक्षणीयः ।
तस्मिन् विनष्टे स्वकुलं विनष्टं न नाभिभंगे ह्यरका वहंति ॥ २९ ॥
इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ ३० ॥
क्षते प्रहारा निपतंत्यभीक्ष्णं धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवंति छिद्रेष्वनर्था बहुलीभवंति ॥ ३१ ॥
पिबंति नद्यः स्वयमेव नांभः स्वयं न खादंति फलानि वृक्षाः ।
नादंति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः ॥ ३२ ॥

घृष्टं घृष्टं पुनरपि पुनश्चंदनं चारुगंधं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदंडम् ।
दग्धं दग्धं पुनरपि पुनः कांचनं कांतवर्णं
न प्राणांते प्रकृतिविकृतिर्जायते ह्युत्तमानाम् ॥ ३३ ॥
क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरंगैर्नट इव वलीमंडिततनु-
र्नरः संसारांते विशति यमधानीजवनिकाम् ॥ ३४ ॥
प्रतिपक्षेणापि पतिं सेवंते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितां शतानि हि समुद्रगाः प्रापयंत्याब्धिम् ॥ ३५ ॥
उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः ।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुंजो विभाति विभाकरः ॥ ३६ ॥
गंगेवाघविनाशिनी जनमनः संतोषवच्चंद्रिका
तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानांधकारापहा ।
छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा
पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा ॥ ३७ ॥
उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ ३८ ॥
बहिःसर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमभिसंधाय कपटै-
स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ ३९ ॥
किं क्वापि प्रलयानलैर्विटपिनो निर्दह्य भस्मीकृताः
किंस्विद्दैवगजेन पंकजवनं निष्कंदमुन्मूलितम् ।

किं वा हंत कृतांतकेसरिभयात्त्यक्तो मदः कुंजरै-
र्येनास्मिन् विरसे करीरकुसुमे हा भृंग विश्राम्यसि ॥४०॥
इहानेके सत्यं सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वंतो जगति निवसंत्येव सुधियः ।
कियंतस्ते संतः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ ४१ ॥
आशा नाम नदी मनोरथजला तृष्णातरंगाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरा प्रकटितप्रोत्तुंगचिंतातटी
तस्याः पारगता विशुद्धमनसो नंदंति योगीश्वराः ॥४२॥
प्रथमवयसि पीतं तोयमल्पं स्मरंतः
शिरसि निहितभारा नालिकेरा नराणाम् ।
उदकममृतकल्पं दद्युराजीवितांतं
न हि कृतमुपकारं साधवो विस्मरंति ॥४३॥
मज्जंतोऽपि विपत्पयोधिगहने निःशंकधैर्यावृताः
कुर्वंत्येव परोपकारमनिशं संतो यथाशक्ति वै ।
राहोरुग्रकरालवक्त्रकुहरग्रासाभिभूतोप्यलं
चंद्रः किं न जनं करोति सुखिनं ग्रासावशेषैः करैः ॥४४॥
अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥४५॥
गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥४६॥
दीनानां कल्पवृक्षः स्वगुणफलमतः सज्जनानां कुटुंबी
आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।
सत्कर्ता नावमंता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
श्लोकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसंतीव चान्ये ४७

चांचल्यमुच्चैःश्रवसस्तुरंगात्कौटिल्यामिंदोर्विषतो विमोहः ।
इति श्रियाऽशिक्षि सहोदरेभ्यो जाने न कस्माद्गुणवाद्विरोधः ॥४८॥

गंधाढ्यां नवमालिकां मधुकरस्त्यक्त्वा गतो यूथिकां
तां दृष्टाशु गतः स चंदनवनं पश्चात्सरोजं गतः ।
बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मंदधीः
संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ ४९ ॥

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरः स्थिते ।
नान्यामंगुलिमभ्येति संख्यायामुद्यतांगुलिः ॥ ५० ॥

भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलः ।
मुखमिंदुरुज्ज्वलकपोलमतः प्रतिमाच्छलेन सुदृशामविशत् ॥ ५१ ॥
बृहत्सहायः कार्यांतं क्षोदीयानपि गच्छति ।
संभूयांभोधिमभ्येति महानद्या नगापगा ॥ ५२ ॥

भयं तावत्सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद्भवति हृदये चैव निहितम् ।
ततोऽध्यारूढानां पदमसुजनद्वेषजननं
गतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ ५३ ॥

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च वसंति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिंडार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ ५४ ॥

दोषाकरोऽपि कुटिलोऽपि कलंकितोऽपि
मित्रावसानसमये विहितोदयोऽपि ।
चंद्रस्तथापि हरवल्लभतामुपैति
नैवाश्रितेषु महतां गुणदोषशंका ॥ ५५ ॥

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षयभुजे निष्पादिते वेधसा ।
इंदुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिंतारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ ५६ ॥

मृद्घटवत्सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवद् दुर्भेद्यश्चाशुसंधेयः ॥ ५७ ॥

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रांतं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयंचंद्रः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ ५८ ॥

गांगमंबु सितमंबु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥५९॥

कुमुदशबलैः फुल्लांभोजैः सरोभिरलंकृतां
मरकतमणिश्यामां शष्पैर्विहाय वनस्थलीम् ।
स्मरति करभो यद् वृक्षाणां चरन्मरुधन्वनां
परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥ ६० ॥

आपुष्पप्रसवान्मनोहरतया विश्वास्य विश्वं जनं
हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह ।
यावन्नैति परोपभोगसहतामेषा ततस्तां तथा
ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनातिवंद्यो भवान् ॥ ६१ ॥

अगुरुरिति वदतु लोको गौरवमत्रैव पुनरहं मन्ये ।
दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥ ६२ ॥

भानुः सकृद्युक्ततुरंग एव रात्रिंदिवं गंधवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ ६३ ॥

हस्त इव भूतिमलिनो यथा यथा लंघयति खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ६४ ॥
शमयति गजानन्यान्गंधद्विपः कलभोऽपि सन्
भवति सुतरां वेगोदग्रं भुजंगशिशोर्विषम् ।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ ६५ ॥
सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदपि तत्क्षणभंगि करोति चेदहह कष्टमपांडितता विधेः ॥ ६६

धवलयति समग्रं चंद्रमा जीवलोकं
किमिति निजकलंकं नात्मसंस्थं प्रमार्ष्टि ।
भवति विदितमेतत्प्रायशः सज्जनानां
परहितनिरतानामादरो नात्मकार्ये ॥ ६७ ॥
केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवंतौ
विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः ।
विश्वानंदोपचयचतुरो दुर्जनानां दुरापः
श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥ ६८ ॥

# NOTES.

I

रात्रावपि this very night. यस्यास्ति सर्वत्र गतिः he who has access everywhere, i. e. he who can go anywhere. कस्मात् why.

तद्यद्यायुःक्षयोऽस्ति If, therefore, life is to end, i. e. if we are destined to die.

तिष्ठति lives, remains alive. कृतप्रयत्नोपि ( कृतः प्रयत्नः यस्मै and not येन ) though efforts be made for him; though well taken care of. सुखं adv. happily.

II.

उद्धृत्य having spared, विश्वासमुत्पाद्य having created confidence in him with respect to me. व्यवहार conduct, character.

एतादृशः to such an extent, so much ( said ironically ). चांद्रायण a vow; for a full explanation See M. S. Apte's Edition of हितोपदेश. परस्परं विवदमानानाम् mutually conflicting, at variance with one another. अत्र on this point. जिज्ञासा inquiry, search.

III.

पादुकापरिभोगेण by being used as wooden shoes or sandals.

गूढमुपनीता was secretly carried off or removed.

संबंध matrimonial alliance.

आपातदुष्प्रसहं very difficult to contend with on account of the sudden attack.

परीप्सुः wishing to save or preserve.

सफलीकृतभर्तृपिंडः who proved true to his master's salt.

इमे काषाये गृहीते I put on these red garments.

अनाचक्षाणया in not telling. नैभृत्यम् silence.

परिणमंतं being realised or fulfilled.

IV.

प्रियेषु सौभाग्यफला &c. for the beauty ( of women ) has for its fruit the securing of the attachment or favour of their lover, i. e. beauty which succeeds in winning the heart of lovers.

अवंध्यरूपतां कर्तुं to make her beauty not fruitless (or fruitful).

मुनिव्रतात् from such penance as is performed by sages.

ईप्सितार्थस्थिरनिश्चयं ( मनः ). ईप्सितार्थे स्थिरः निश्चयः यस्य=firmly bent upon gaining the desired object. कदाचित् once upon a time. फलोदयान्ताय ending with the appearance of the fruit; the penance ending when the desired object should be accomplished. अभिनिवेश determination. विलोलयष्टि the moving sticks or folds ( of the necklace ). बालारुण the young or morning sun. पयोधर &c. the close contact of which ( with the body ) was interrupted by the protuberance of her breasts. निवर्तित: taken away or withdrawn from, not used or applied to. प्रणयी fond of, accustomed to wear उपधायिनी using as a pillow. दृष्टं ( दृष्टिः ) a look or glance. घटस्तनप्रस्रवणैः--घटा एव स्तनौ in the case of trees, and घटाविव स्तनौ in the case of Guha.

येषां पुत्रवात्सल्यं the maternal love ( of Pârvati ) for whom. त्वगुत्तरासंगवतीं wearing ( lit. in close contact with ) the bark of trees as an upper garment. नेत्रप्रतिघातिनी ( प्रभा ) dazzling the eyes. अभीष्टप्रसवः the desired fruit or produce in general. पर्णवृत्तिता living on leaves of trees &c.

## V.

यज्ञशरणात् from the place of sacrifice, being engaged in performing a sacrifice.

वैदिशस्थं being in Vaidisa ( name of a place ).

उपावर्तनीयः to return ( at the end of a year ).

प्रार्थितः was seized or captured.

अंशुमतेव as by Ansumat, the grandson of Sagar.

अकालहीनं without delay, without losing a single moment.

## VI.

निषिक्तरजतद्रव &c. like the fluid of molten silver.

क्षणनष्टदृष्टः invisible this moment and visible in the next. चक्रं realm, kingdom.

अध्वानं गतः has taken his way ( to the forest ), or has remained silent.

वृतः resorted to or obscured by.

करसमूहं the collection of rays ( or taxes ).

विद्युद्गुण &c. with their middle parts fastened with ropes in the form of lightning.

आक्रंदित: invited, called out to.

असाधावुपकृतमिव like an obligation conferred on a bad man. प्रकामांतस्तप्तं internally heated to an excessive degree.

प्रथमश्री: who has acquired wealth for the first time. विवल्गति is dancing about, proudly moving about.

VII.

वार्षपर्वणी the daugher of वृषपर्वन् king of Asuras. व्यजायत gave birth to.

अकालेनैव even before it was time, prematurely.

त्वद्वयसा by means of your youth.

चोदयामास asked or commanded.

विश्वाची the name of a nymph. समदृशे: of him who looks on all things eqnally.

निर्द्वंद्व: free from the two, viz. good and evil, heat and cold &c.

VIII.

दुहितृनिर्विशेष not differing in treatment from one's own daughter.

कर्माणि acts or treatment. अभिविनीततया on account of her polite or good behaviour.

कृताभिजातप्रणामां who had made a bow befitting a person of noble birth.

सर्वविश्रंभेषु in all confidential affairs.

IX.

अध्वगवेशा habited like a traveller.

प्रियप्राया for the most part kind.

अनवगीता: unimpeachable, blameless.

पुरो वा &c. the flavour ( interest ) of which is unchanged ( unabated ) either before or afterwards, i. e. which is at all times equally pleasing and unchangeable.

कां पुनरत्रभवतीमवगच्छामि whom should I know your ladyship to be ? Whom have I the honour of addressing ?

निगमांतविद्यां i. e. Vedanta. पुराणब्रह्मवादिनं the old or primeval expounder of Brahma.

स्तन्यत्यागमात्रके ( वयसि ) at an age when a child ceases to suck its mother.

सरहस्य attended with mystical spells ( with which they are discharged or withdrawn ).

त्रयीवर्जं except the three Vedas.

अतिप्रदीप्तप्रज्ञाभ्यां of very bright intellect or parts.

ज्ञाने शक्तिं करोति imparts strength or sharpness to the power of knowing.

आकस्मिकप्रत्ययभासं suddenly inspired.

शाश्वती: समा: for eternal years, for all time to come.

शब्दब्रह्मप्रकाश: the light of Brahma consisting ( in the form ) of words, cf. वागात्मनि ब्रह्मणि below.

तर्हि पंडित: संसार: the world ( worldly people and not ascetics ) then has grown wise.

प्रासंगिकीनां विषय: कथानाम् the subject of occasional conversation.

न: अस्माभि: by us. निर्माणभाग: the lot of creation, i. e. fate.

कठोरीभूतो दिवस: the day is full-grown, i. e. it is quite noon.

कंडूलद्विपगंड &c. falling down by the shaking caused by the rubbing of the fleshy parts of the itching temples of elephants.

छायापास्किरमाण &c. the barks of which have the small insects therein pulled out by the mouths ( beaks ) of birds &c. scratching the ground under the shade.

कुलायद्रुमा: trees used by birds to build their nests on.

XI.

उत्तरेण the north of ( gov. acc. case ).

बद्ध formed or constructed of.

मानसं the name of a lake to which the swans are said to resort at the approach of rains.

व्यपगतशुच: free from grief or uneasiness.

प्रेक्ष्य governs त्वां. एक:—अन्य: the one ( Asoka )—the other ( Kesara of Bakula ).

अनतिप्रौढवंशप्रकाशै: having the lustre ( appearance ) of bamboos not full-grown.

शिंजावलयसुभगै: charming on account of the tinkling bracelets.

क्षामच्छायं diminished in lustre, looking gloomy or dismal.

कलभतनुतां गत्वा having become as small as the cub of an elephant.

विद्युदुन्मेषदृष्टिं--विद्युत् उन्मेष एव दृष्टिस्तां.

XII.

व्यवहारी a sea-trader.

धात्रीभावेन कल्पिता appointed as a nurse.

अभावि an impersonal construction—the child became capable of &c.

XIII.

प्रणव: the sacred syllable *Om.*

देहमाश्रित: having assumed a body.

सर्वातिरिक्तसारेण qualifies आत्मना ( with his body ).

आकारसदृशप्रज्ञ: whose intelligence was like ( worthy of or suitable to ) his form; so is सदृश to be interpreted in the next three lines of the verse.

उदय: success, fulfilment of a desired object. भीमकांतै: भीमैश्च कांतैश्च.

आमनो: since ( the time of ) Manu.

नियन्तृ means a ruler or regulator ( of men ), and also a charioteer.

नेमिवृत्तय: acting like the rims of wheels.

उत्स्रष्टुं to return or give back increased a thousand-fold.

फलानुमेया: प्रारंभा: his undertakings were to be inferred from their fruits or results.

गुणा: &c. thus his good qualities being associated with ( other ) good qualities ( of an opposite nature ), seemed to be derived from a common source.

जन्महेतव: the authors of their being.

गां दुदोह milked the earth ( levied taxes &c. ).

श्रुतौ स्थिता remained in ( was confined to ) the word itself ( and not in reality ).

वेलावप्रवलयां whose circular ramparts were the sea-coast lines.

दाक्षिण्यरूढेन become current ( among the people ) on account of her politeness.

XIV.

आकुलीक्रियमाण: being overcome or overpowered.

मानुषतासुलभो लघिमा lightness natural to humanity. कला a very small portion.

क—क showing disparity between two things.

अनेकसिद्ध &c. crowded by various gods and demigods.

दुर्निवारता irresistible nature, irresistbility.

आत्मीयां कुर्वंति make as their own i. e. subdue or overpower ( the subject being व्यसनोपनिपाता: understood ) such a form not fit to be affected by them.

शरीरधर्मन् an embodied being.

द्वंद्वानां of couples of opposite conditions or qualities ( such as सुख & दु:ख, शीत & उष्ण ).

क्षेत्रीक्रियंते are subdued or overpowered.

XV.

प्रवासस्थं journeying, travelling abroad.

साधुसाधारण &c. whose royal riches were common to (shared with ) the good.

बिभर्षि आकारं have the appearance of, look like.

गुरुणा by your revered father.

स्वपदोन्मुखेन when about to enter into his own world ( विष्णुलोक ).

सौराज्यबद्धोत्सवया in which festivities were indulged in on account of good goverment. तल्प a large palatial building.

नदन्मुखोल्का &c. which seek for flesh by means of fire-brands, held in their howling mouths. अलास्या: ceasing to dance.

शेष ( adj. ) remaining.

चित्रद्विपा: elephants painted in pictures.

मूर्च्छंति take no effect, do not shine.

तिरस्क्रियंते are obscured or covered with.

कारणमानुषीं human for ( accomplishing ) a particular purpose.

शरीरबंधेन with the body, body and all. प्राग्रहर: principal, chief.

XVI.

उत्खातखड्गः with the sword drawn.

पुष्करावर्तक name of two classes of clouds.

अथ if. इति=तर्हि. नोदिताः have not risen.

स्वैरं slowly, in an undertone. शेषे at the end.

परिगतपरिगंतव्य एव भवान् you know what is to be known, i. e. you are wise.

पलितधवले-पलितैर्धवले. सर्वे सहध्वम् how do you all bear or tolerate it ?

पलित......काशे which surpassed the Kasa grass ( in whiteness ) by means of its white grey hair.

नवः परिभवावतारः a new or strange way of defeat. अश्रौघद्रविण &c. अश्रौघ एव द्रविणं.

पाणिं निदधतः while placing your hand.

अलीकप्रकृतिजिह्मचेतसा of a crooked mind by reason of his hypocrite disposition.

उदायुधैः with the weapons lifted up or raised to strike. उद्गतानि आयुधानि येषां तैः

अभीष्मद्रोणं devoid of Bhishma and Drona.

कथं भवेत् what will be the state of, how will it fare.

अभ्युदीक्षमाणः waiting.

प्रणय a desire or request.

XVII.

धृतायुधप्लवाभ्यां--धृतमायुधमेव प्लवो याभ्याम्.

कार्कश्यं hardness, firmness as opposed to मार्दव just below. यदा since.

स्वभुजगुरुबलः whose great strength consists in his own arm ( बाहुमात्रसहायः ).

अधिकवयाः older in age ( than a boy ), i. e. youthful or old.

वोढुमध्यवसितः ( समरभारः ) is determined to be undertaken.

भवता कृतपरिकरः when equipped as a General by you.

प्राक्प्रतिपन्नोयमर्थोऽङ्गराजस्य this office has been already promised to Angaraja. अनुशासनीय should be punished or chastised.

अद्य शेषे निशां you will sleep to-night.

निःसोमकम् deprived of kings of the lunar race.

नृपकाननातिगुरु: very heavy on account of the forest in the form of kings.

वीरजनाधिक्षेपेण not by reviling warriors.

गुरुशाप alludes to the curse pronounced upon Karna by Parasurama with whom the former lived for the sake of acquiring the knowledge of war in the disguise of a Brahmana.

स्तुतिवंशकीर्तनविदां versed in panegyrics and descriptious of families.

विक्रमैकरस: whose sole sentiment is heroism (said ironicially).

यदि शस्त्रं &c. construe thus: यद्यपि ( वीरैः ) शस्त्रं उज्झितं ( तथापि ) अशस्त्रपाणयोपि ( ते ) उदायुधान् अरीन् न निवारयन्ति किम् (अपि तु निवारयंत्येव).

उदासितं he remained inactive or indifferent.

भुजबलदर्पध्मायमानस्य being elated with the pride of the might of your arm.

उपेक्षितानां &c. the meaning is : if cowards, being contemptuously treated, be not punished by persons, they begin to boast of their prowess.

वाम: पंथा: a contrary course.

स्वबलप्रधानाविरोधस्य for the enmity between the chiefs of one's own army.

नाथेऽस्मिन् while he is the leader of the army.

सेत्स्यति will be accomplished.

XVII(*a*).

मार्दवं भजते becomes soft. प्रहरिष्यत: intending to strike.

हिमसेकविपत्ति: blighted by the fall of snow. यदा since.

पूर्वं=प्रथम. भावनिबंधना based on sincerity.

भृंगरुच: black like bees.

त्वदुपावर्तनशंकि full of doubt as to your moving.

उच्छ्वसितालकं the curls of which are waving.

विश्रांत=विरत ceased. अर्पित placed, laid.

अवेक्ष्य मां having taken me ( my state ) into account. फलिनी. The Priyangu creeper.

कृतदोहद: whose desire ( of being struck with the foot ) was fulfilled by you. निवाप an offering of the flowers at the Sraddha.

स्मरता qualifies अशोकेन.

एकरस: of unchanging love, exclusively devoted to one.

व्यवसाय: प्रतिपत्तिनिष्ठुर: and yet your act of abandoning me) is cruel by reason of its determination. एतावत् only so far, ending here.

करुणार्थग्रथितं strung with a pathetic or piteous meaning, i. e. lamenting in a piteous manner.

शाखारस: the sap or juice exuding from the branches. तदंत्यमंडनां whose last decoration was the celestial flowers themselves [ तत्=दिव्यकुसुमं ]. अनलाय विससर्ज consigned to fire.

नृपति: सन् protector or lord of men as he was.

वाच्यदर्शनात् perceiving the censure ( to which he would be exposed ).

XVIII.

अभानुभेद्यं not to be penetrated or dispelled by the sun.

गर्भेश्वरत्वं being born in the purple or with a silver spoon in one's mouth.

एकैकं even one taken singly.

मधुरतराण्यापतंति are regarded as pleasant.

सुखं easily. निर्भरं fully, firmly.

यथा यथा दीप्यते &c. the meaning is that the more the desire for wealth is cherished, the more it leads one to commit dark or black deeds. आध्मात filled up.

व्यसनशतशरव्यतामुपगता: become the marks of ( exposed to ) hundreds of calamities.

गुणपक्षं the side of merits, representing even vices as virtues.

आप्ततामापादयन्ति consider as their relative.

खलीकरोति causes to act like a wicked person.

सिद्धादेश: whose commands are obeyed ( or whose predictions are fulfilled ).

XIX.

विद्युन्माली lined with lightning. वशे वर्तते is obedient to. शंसितव्रत: of praiseworthy action or conduct.

न यज्वन: विसृजंति do not give to sacrificial priests ( आप्तदक्षिणा: ).

